कारणम्, यथा तैलस्य तिलाः, दध्नः क्षीरम्। अत्र तैलं दधि च यदि न स्यात् कथं तस्योपादानस्य[5] ग्रहणं तदर्थिभिः क्रियते। तस्मादुपादानसंग्रहात् सदेव कार्यम्। अन्यथा सिकतासलिलयोरपि ग्रहणं स्यात्॥

'सर्वसम्भवाभावात्' इति। यद्यसत्कार्यं भवेत् तदा सर्वस्य सर्वदा सर्वत्र सम्भवः स्यात्। न चैवम्। तस्मात्सदेव कार्यम्॥

'शक्तस्य शक्यकरणात्' इति। शक्तं[6] कारणं नाशक्तमित्येवमप्यवगन्तव्यम्[7]। अन्यथोपहत[8]शक्तेर्बीजादङ्कुरोत्पत्तिप्रसङ्गः। शक्तश्च[9] को भवितुमर्हति, यः शक्तिमान्। तस्य शक्तिमतः शक्यस्य करणात्, शकनीयस्य कार्यस्योत्पादनादित्यर्थः। एवं च तच्छकनीयं यदि कारणे शक्तिरूपेणावस्थितं स्यात्। तस्मात्सदेवोत्पद्यते नासत्॥

'कारणभावाच्च'[10] इति। कारणस्य सत्त्वादित्यर्थः। यद्यसत्कार्यमुत्पद्यते किमिति कारणभावेन[11] कार्यस्य भावो भवति। भवति च। तस्माच्छक्तिरूपेणावस्थितमिति गम्यते। अथवा—कारणभावादिति[12] कारणस्वभावात्। यत्स्वभावं कारणं तत्स्वभावं कार्यम्, यथा स्निग्धस्वभावेभ्यस्तिलेभ्यः स्निग्धमेव तैलम्, मृदो मृत्स्वभावो घटः। यद्यसत्कार्यं स्यात्, असत्स्वभावेभ्यो ह्युत्पद्येतेत्येवं[13] सांख्यानां सदेवोत्पद्यत इति सिद्धान्तः॥९॥

---

एवं महदादिकार्यं सदेवोत्पद्यत इति व्यवस्थाप्य प्रकृतेर्विरूपं सरूपं च दर्शयति। तत्र प्रकृतेर्विरूपमधिकृत्याह—

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं, विपरीतमव्यक्तम्॥१०॥

५ ख. °स्यापादानस्य। ६ शक्तं इति कपुस्तके नास्ति। ७ ख. °भ्युपगन्तं। ८ क. °हृ°। ९ ख. °क्तः। १०. क. कारणा°। ख. कारणा°। ११ क. कारणादेव न। १२ क. °णा°। १३ ख. °द्य°।

'हेतुमत्' इत्यादि । व्यक्तं[1], महदादिभूतपर्यन्तम्, अव्यक्तं प्रधानम् । तत्र व्यक्तं[2] हेतुमत्, यथास्वं कारणेभ्य उत्पद्यमानत्वात् । तत्र प्रधानादुत्पद्यमानो[3] महान् हेतुमान्, महतोऽहङ्कारो हेतुमान्, अहङ्कारात्तन्मात्राण्येकादशेन्द्रियाण्युत्पद्यमानानि हेतुमन्ति च, तन्मात्रेभ्यश्च महाभूतानि हेतुमन्ति । विपरीतमव्यक्तमहेतुमदित्यर्थः, तस्यान्यतः कुतश्चिदनुत्पादात् । नहि प्रधानात्किंचिदपरमस्ति यतस्तदुत्पद्यते ॥

अनित्यं व्यक्तम्, कारणेभ्य उत्पन्नत्वात् घटादिवत् । कारणानि च प्रागुक्तान्येव । विपरीतमव्यक्तं नित्यमित्यर्थः, कुतश्चिदनुत्पन्नत्वात् ॥

अव्यापि[4] व्यक्तं प्रादेशिकमित्यर्थः । दैवं मानुषं तैर्यग्योनं[5] च, तदानीमन्यत्रावर्तमानत्वात् । सर्वगतं विपरीतमव्यक्तं व्यापीत्यर्थः, देवादिषु त्रिषु लोकेषु सर्वदा वर्तमानत्वात् ।

'सक्रियम्' इति । क्रियाशब्देनात्र संसरणम्[6]भिप्रेतम्, न क्रियामात्रम् । महदादिसूक्ष्मपर्यन्तं व्यक्तं देवादि संसरतीत्यर्थः । विपरीतमव्यक्तम्, असंसारि । त्रिषु लोकेषु स्थितत्वान्न संसरति । न[7] पुनः क्रियैव नास्तीति निष्क्रियम्, तस्य जगत्[8]कर्तृत्वात् ॥

अनेकं व्यक्तम्, महदादिभूतपर्यन्ततायास्त्रयोविंशतिप्रकारत्वात् । विपरीतं व्यक्तम्, त्रयाणां लोकानां तस्यैकस्य कारणत्वात् ॥

'आश्रितम्' इति । यद्यस्मादुत्पन्नं महदादि व्यक्तं तदेव[9] तदाश्रितं नान्यत् । उत्पन्नमन्यदाश्रितमितिदर्शनार्थं वचनम्, अन्यथा हेतुमदित्यनेनैवाश्रितं सिद्धमेव । विपरीतमव्यक्तम्, अनाश्रितम् । ततोऽन्यस्य [10]कारणस्याभावात् ॥

'लिङ्गम्' इति । लिङ्ग्यतेऽनेनाव्यक्तमिति लिङ्गम्[11] । विपरीतमव्यक्तम्, न लिङ्ग्यते किञ्चिदनेनेति । अथवा लयं गच्छतीति लिङ्गम् ।

---

१ क. °क्त । २ व्यक्त इति कपुस्तके नास्ति । ३ क. °नत्वा° । ४ क. अत्रापि । ५ ख. तैःयुग्यो° । ६ ख. °मत° । ७ न इति खपुस्तके नास्ति । ८ ख. अज° । ९ तदेव इति खपुस्तके द्विरावृत्तम् । १० ख. क° । ११ ख. °ङ्गः ।

प्रलयकाले[12] ह्याकाशादयः पञ्च यथाक्रमं शब्दादितन्मात्रेषु लीयन्ते, तन्मात्राणीन्द्रियाणि चाहङ्कारे, अहङ्कारो महति, महान्प्रधान इति। विपरीतमव्यक्तम्, न कुत्रचिदिदं लीयते, अहेतुत्वात्॥

'सावयवम्' इति। शब्दादयोऽवयवा उच्यन्ते। तैराध्यात्मिकं बाह्यं च[13] व्यक्तं युक्तम्। विपरीतमव्यक्तम्, तैरयुक्तत्वात्॥

परतन्त्रम्। न स्वतन्त्रम्। यदस्मादुत्पद्यते तदेवानुरुद्ध्य[14] स्वकार्यं जनयति न तद्व्यतिरेकेणेति दर्शनार्थम्। अन्यथा हेतुमदित्यने[15]नैव परतन्त्रत्वं प्रसिद्धमेव। विपरीतमव्यक्तम्, स्वतन्त्रं न किञ्चिदपेक्षते॥१०॥

सारूप्यमधिकृत्याह—

त्रिगुणमविवेकि विषयः सामान्यमचेतनम्प्रसवधर्मि।
व्यक्तं, तथा प्रधानम्, तद्विपरीतस्तथा च पुमान्॥११॥

'त्रिगुणम्' इत्यादि। त्रयस्सत्त्वादयो गुणा यस्य तत्त्रिगुणं व्यक्तम्। तथा प्रधानमपि त्रिगुणं तत्स्वभावत्वात्॥

'अविवेकि' इति। अविवेचनशीलं व्यक्तम्, अचेतनत्वात्। यद्वा[1] गुणेभ्यस्तस्य पृथक्त्वाभावादविवेकि। तथा प्रधानमपि॥

सामान्यं व्यक्तम्, सर्वपुरुषोपभोग्यत्वान्मल्लदासीवत्। तथा प्रधानमपि॥

अचेतनं[2] व्यक्तम्, सुखदुःखमोहान् न वेदयतीत्यर्थः। तथा प्रधानमपि॥

'प्रसवधर्मि' इति[3]। प्रसवो धर्मोऽस्यास्तीति प्रसवधर्मि व्यक्तम्। तथा प्रधान[4]मपि। द्वयोरपि प्रसवधर्मित्वम्[5]॥

---

१२ क. प्रस्थन ׀ ख. प्र (पठितुं न शक्यं) य° । १३ क. त्व। १४ क. °न्ध्य। १५ ख. °मित्य°।

१ क. ख. यदि वा। २ क. ख. चेतनं। ३ क. द्वयोरपि। 'प्रसवधर्मि' इति-इति नास्ति। ४ क. °धानो°। ५ एतदनन्तरं कपुस्तके 'प्रसवधर्मी' इति अस्ति।

तथा च प्रधानान्महान्, महतोऽहङ्कार[6] इत्यादिना स्वकार्योत्पादनधर्मत्वाद्यथा व्यक्ताव्यक्तयोर्वैरूप्यं सारूप्यं च[7], तथा किं पुरुषस्य चापीत्याह—'तद्विपरीतस्तथा च पुमान्' इति। व्यक्ताव्यक्ताभ्यां[8] कैश्चिद्धर्मैर्विलक्षण-इत्यर्थः ॥

अत्र पूर्वस्या आर्याया अर्थो योज्यते। हेतुमद्[9] व्यक्तम्, अहेतुमदव्यक्तम्। पुरुषोऽप्यहेतुमान्, तस्य कुतश्चिदनुत्पादात् ॥

अनित्यं व्यक्तम्, नित्यमव्यक्तम्। पुरुषो नित्यः, कुतश्चिदनुत्पन्नत्वात् ॥

अव्यापि व्यक्तम्, व्याप्यव्यक्तम्। पुरुषोऽपि व्यापी यदा प्रकृत्या मुक्तः[10]। युक्तश्चेत्, व्यक्तेन सदृशो न प्रधानेन। हि सर्वदा देवादिषु प्रवर्तते ॥

सक्रियं व्यक्तम्, निष्क्रियमव्यक्तम्, असंसारित्वात्। पुरुषोऽपि निष्क्रियः, कर्तृत्वाभावात्[11] ॥

अनेकं व्यक्तम्, एकमव्यक्तम्। पुरुषोऽनेको बहुत्वात्। तस्य बहुत्वं प्रतिपादयिष्यति। प्रधानेनात्र वैसादृश्यं तस्यैकत्वात् ॥

आश्रितं व्यक्तम्, अनाश्रितमव्यक्तम्। पुरुषोऽप्यनाश्रितः, कुतश्चिदनुत्पन्नत्वात् ॥

लिङ्गं व्यक्तम्, अलिङ्गमव्यक्तम्। पुरुषोऽप्यलिङ्गः। न किंचिदनेन लिङ्ग्यते न वायं[12] कदाचिल्लीयतेऽनुत्पन्नत्वात् ॥

सावयवं व्यक्तम्, निरवयवमव्यक्तम्। पुरुषोऽपि निरवयवः शब्दादिभिरयुक्तत्वात्।

परतन्त्रं व्यक्तम्, स्वतन्त्रमव्यक्तम्। पुरुषोऽपि स्वतन्त्रः, कुतश्चिदनुत्पन्नत्वात् ॥

द्वितीयस्या आर्याया अर्थो योज्यते—

---

६ क. °प्यत्वं°। ७ पुमान्' इति—इति खपुस्तके नास्ति। ८ क. °र्मै वि° ९ द् इति खपुस्तके नास्ति। १० क. °त्मकः। ११ ख. °त्वात्। १२ क. पा°।

त्रिगुणं व्यक्तमव्यक्तं च। निर्गुणः पुरुषः, गुणानां तत्राभावात् ॥

अविवेकि व्यक्तमव्यक्तं च। विवेक्ता पुरुषश्चेतनत्वात्। विविक्तो वा निर्गुणत्वात् ॥

विषयो व्यक्तमव्यक्तं च। पुरुषो निर्विषयः[१३], भोक्तृत्वात्, न भोग्यः ॥

सामान्यं व्यक्तमव्यक्तं च। पुरुषोऽसामान्यः, अविषयत्वात् ॥

अचेतनं व्यक्तमव्यक्तं च[१४]। चेतनः पुरुषः सुखादिवेदनत्वात् ॥

प्रसवधर्मि व्यक्तमव्यक्तं च। पुरुषोऽप्रसवधर्मी, अकर्तृत्वात्। इत्युक्तम् ॥११॥



त्रयाणामपि वैरूप्यं सारूप्यं चेति[1] त्रिगुणमित्युक्ते, के के त्रयो गुणाः किमात्मका इत्याह—

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।
अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥१२॥

'प्रीत्यप्रीतिविषादात्मकाः' इत्यादि। प्रीत्यादय आत्मानो येषां गुणानां ते तथोक्ताः सत्त्वरजस्तमांसि त्रयो गुणाः। तत्र प्रीत्यात्मकं सुखात्मकं सत्त्वम्, अप्रीत्यात्मकं दुःखात्मकं रजः, विषादात्मकं मोहात्मकं तमः। गुणा ह्यतीन्द्रियत्वात्परिणत्या सुखादिनानुमीयमानास्तदात्मका इति व्यपदिश्यन्ते ॥

किं पुनरेषां प्रयोजनं[2]मित्याह—'प्रकाशप्रवृ[3]त्तिनियमार्थाः' इति। प्रकाशार्थं सत्त्वं प्रकाशकत्वात्, प्रवृत्त्यर्थं रजश्चलत्वात्, नियमार्थं तमः स्तिमितत्वात् ॥

किमिति ते गुणाः परस्परसव्यपेक्षाः किं वा नेत्याह—'अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः' इति। अन्योऽन्यशब्दः

१३ ख. °योत्रभो°। १४ च इति खपुस्तके नास्ति। १५ क. °र्तृत्वात्।

1. ति—इति खपुस्तके नास्ति। २ ख. °जोन°। ३ °प्र° इति खपुस्तके नास्ति

प्रत्येकमभिसम्बद्ध्यते । अभिभवतीत्यभिभवः । पचाद्यच् । अन्योऽन्यस्याभिभवा अन्योऽन्याभिभवाः । तद्यथा देवेषु सत्वमुद्रिक्तं रजस्तमसी अभिभवति, मनुष्येषु रजः [4]सत्त्वतमसी, तिर्यक्षु (तमः सत्त्वरजसी)[5]। आश्रीयन्त इत्याश्रयाः । कर्मण्यण्[6] । अन्योऽन्यस्याश्रयाः, त्रिदण्डवत् । नाश्रयान्तर[7]मेषाम्, अनाश्रयाश्च कर्तारः । जनयन्तीति जननाः । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । अनेकार्थत्वात् च[8] धातूनां बोधनार्था द्रष्टव्याः । अन्योऽन्यस्य प्रबोधका इत्यर्थः । सर्वं हि व्यक्तमुत्पद्यमानं त्रिगुणात्मकमुत्पद्यते । तत्र यदा सत्त्वमुत्कटं तदा रजस्तमसी न्यक्कृतशक्तिके । प्रबोध्यायस्कान्तो लोहवदुक्तम् (?) । सत्वन्यत्कृतेन[9] गुणेन व्यक्तं जनयति (?) एवं रजस्तमश्च योज्यम् । यदा गुणद्वयमुद्भूतशक्ति तदा द्वयमपीतर[10]दभिभवति, प्रबोधयतीत्यर्थः । अन्योऽन्यमिथुना[11] इति । अन्योऽन्यस्य सहाया इत्यर्थः । तथा चोक्तं विष्णुगीतायाम्—

*रजसो मिथुनं[12] सत्त्वं सत्त्वस्य मिथुनं[12] रजः ।*

*उभयोः सत्त्वरजसोर्मिथुनं[12] तम उच्यते ॥*

एकस्यां व्यक्तौ त्रयाणामभिभवप्रबोधनानुक्तौ व्यक्तम्, इतरे तु तौ[13] एव प्रवृत्तिं जनयन्त इति दर्शयन्नाह—अन्योऽन्यवृत्तय इति । वृत्तिः सुखादिरूपेण परिणतिः । वृत्तिहेतु[14]त्वाद् वृत्तय उच्यन्ते । अन्योऽन्यवृत्तिहेतव इत्यर्थः । तद्यथा काचिद्योषिद्रूप[15]शीलदत्यन्तगुणा (?) सितत्वात्सात्त्विकी, सा भर्तुः सुखमुत्पादयति सपत्नीनां कासांचिद् दुःखं कासांचिद्द्विषा[16]दमित्यत्र सत्त्वमात्मनो[17] द्वयोश्च वृत्तिहेतुः । कस्यचित्प्रभोर-

४. सत्त्व- इति कपुस्तके नास्ति । ५. धनुश्चिन्हाङ्कितं कखपुस्तकयोर्नास्ति, किन्तु मदीयम् । ६ क.ख. °च् । ७ ख. °श्र° । ८ च इति कपुस्तके नास्ति । ९ क. सत्त्वन्यक्कृतेन । १० ख. °तरु° । ११ क. °मिलना । १२ क. मिलनं । १३ क. तत । १४ °त्वा° इति कखपुस्तकयोर्नास्ति । १५ क. °पशील…दत्य° । १६ °द° इति खपुस्तके नास्ति । १७ क. सत्त्वात्मनो ।

त्यन्तशूरत्वाद् भृत्या राजसाः[18], परेषां युध्यमानानां प्रहारैर्दुःखं जनयन्ति, पलायमानानां विषादम्[19], स्वामिनश्च तुष्टिमित्यत्र रज आत्मनो द्वयोश्च वृत्तिहेतुः । मेघांश्चाम्बुगु........[20]वानिषान्धकारीकृत्योन्नतत्वात् (?) तामसाः, ते वर्षन्तः प्रोषितभर्तृकाणां विषादं जनयन्ति, पथिकानां[21] दुःखम् कृषीवलानां तुष्टिमित्यत्र तम आत्मनो द्वयोश्च वृत्तिहेतुः ॥१२॥



एषां दुर्लक्षणानां लक्षणान्तरमाह—

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरु वरणकमेव तमः, प्रदीपवच्चार्थतो वृत्तिः ॥१३॥

'सत्त्वम्' इत्यादि । इष्टं सांख्याचार्याणां सत्त्वं लघु[1]स्वभावं प्रकाशं च । यस्योद्रेकाच्छरीरेऽङ्गानि लघूनि भवन्ति, विषयप्रकाशनसमर्थानि चेन्द्रियाणि । वाह्यानि च द्रव्याणि लघूनि प्रकाशात्मकानि निर्मलानि[2] भवन्ति ॥

'उपष्टम्भकं चलं च रजः'[3] इति । उपष्टम्भयतीत्युपष्टम्भकम् । यस्योद्रेकाद् देवदत्तो व्यवस्यति, चलचित्तश्च भवति । वाह्यानि चलानि भवन्तीति ॥

'गुरु वरणकमेव तमः' इति । वृणोति पिधत्त इति । 'कृत्यल्युटो वहुलम्' इति कर्तरि ल्युट्, करणे वा । पश्चात् स्वार्थे कन्[4] । यस्योद्रेकाद् गुरूण्यङ्गानि भवन्ति, इन्द्रियाणि च तमसैवात्तानि भवन्ति । वाह्यानि च गुरूण्यनिर्मलानि च भवन्ति ॥

उदाहरणदिगियमन्यान्यपि विज्ञेयानि भवन्ति । तथाचाहुः—

१८ °साः इति कखपुस्तकयोर्नास्ति । १९ ख. विषयं । २० क. मेघ्याश्चाम्बु...वानि° । २१ ख. °कात ।

१ क. खलु° । २ क.ख. निर्मूलानि । ३ क. त्वलं त्वरजः । ४ ख. कान् ।

प्रतीति

प्रीतिप्रीति (?) रुचाभिष्वङ्गलाघवानि प्रसादहर्षौ च, स्तम्भौद्धत्यक्षेपचलन[5]शोषणतापभेदाश्च, वरणापध्वंसनसादनगौरवदैन्य[6]भीतयश्चैतानि[7] सत्त्वरजस्तमसां क्रमेण ज्ञातव्यानि लिङ्गानि ॥

ननु चैते परस्परविलक्षणा[8] गुणा विरुद्धत्वात् कथं सम्भूयैकत्र वर्तन्त इत्याह—'प्रदीपवच्चार्थतो[9] वृत्तिः' इति। प्रदीपस्येव प्रदीपवत्। तैलवर्त्यग्निसमुदायः[10] प्रदीपः। यदा समुदायात्म[11]......परस्परविलक्षणानामपि प्रदीपभा[12]...प्रवृत्तिः, तमसि स्थिता घटादयो देवदत्त...[13] प्रकाशयितव्या इति, तथा सत्त्वरजस्तमसां पुरुषार्थहेतुना प्रवृत्तिः, पुरुषार्थशब्दोपलब्धि[14]श्चेति ॥ १३ ॥



ननु च 'त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि[1] व्यक्तम्', तत्र सुखदुःखमोहोपलब्धेस्त्रैगुण्यं व्यक्तं सिद्धम्, अविवेक्यादयो[2] धर्माः प्रसवपर्यन्ताः कथं सिद्ध्यन्तीत्याह—

अविवेक्यादिस्सिद्धस्त्रैगुण्यात्तद्विपर्ययाभावात्।
कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धम् ॥१४॥

'अविवेक्यादिः सिद्धः[3]' इत्यादि। गुणिद्वारेण गुणाभिधानम्। अविवेक्यादिगुणस्सिद्धः। व्यक्त इति वाक्यशेषः॥

कुतः? त्रैगुण्यात्। कथं? यस्माद् गुणा[4] एवाविवेकिनो भोग्या-

५ क. स्तम्भौद्धस° । ख. स्तम्भोद्धत्य° । ६ ख. °दैत्य° । ७ ख. °श्च ए...नि ८ क.ख. °स्पर...णलक्ष° । ९ क. °चा...तो । १० क. °र्त्यग्र° । ख. °र्त्याभि° ११ क. °स्यर° । १२ °भा. इति खपुस्तके नास्ति । १३ °तस्य–इति कखपुस्तकयोर्नास्ति । १४ क.ख. °शब्द...पलब्धि° ।

१ क.ख.–प्रसवध...क्तं । २ क.ख. अविवे...दयो । ३ °द्धः इति कपुस्तके नास्ति । ४ क. गुण ।

स्सामान्या अचेतनाः प्रसवधर्मिणश्च, ते च व्यक्ते सिद्धा इति सिद्धा गुणः ॥

'तद्विपर्ययाभावात्' इति। (त्रैगुण्यस्याभावादिति[5])। त्रैगुण्यस्याभावेऽविवेक्यादयोरभावात्। न हि निर्गुणस्य पुरुषस्या[6]विवेक्यादिः सम्भवति। तस्मात्त्रैगुण्यादेवाविवेक्यादिस्सिद्धः॥

एवं च सति, प्रधानमपि त्रैगुण्यात्तथाविधं सिद्धम्। यदाह— 'कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धम्' इति। कारणस्य यो गुणः स[7] आत्मा स्वभावो यस्य तत्तथोक्तम्। तस्य स्वभावस्तत्त्वम्। तस्मादिह लोके कारणगुणकं कार्यं दृष्टम्। शुक्लैः कृष्णैर्वा तन्तुभिरारब्धः पटः शुक्लः कृष्णो वा भवति। यद्यव्यक्तं तथाविधं न स्यात्, कथं व्यक्तं तथाविधं भवेत् ॥१४॥



ननु च सति धर्मिणि धर्माश्चिन्त्यन्ते, प्रधानस्यैव धर्मिणोऽलब्धसिद्धित्वात् कथं[1]मविवेक्यादीत्याह—

भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च।

कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥१५॥

'भेदानाम्' इत्यादि। कार्यतस्तदुपलब्धेर्महदादि तच्च कार्यमित्यनेनैव साधितेऽस्मिन् यथावदधिगते पुनर्दाढर्यार्थं समनन्तरोपादानम्[2]। भिद्यन्त इति भेदाः कार्यविशेषास्तेषां (एकस्संसर्गी दृष्टः[3]) परिमाणाच्च[4]। भेदानां परिमितत्वादित्यर्थः। येन च परिमितास्तेषामेकः संसर्गी[7] दृष्टः[8]। यथा[5] मूलाङ्कुरपत्रकाण्डप्रसवपुष्प[6]तुषतण्डुलकणानां भेदानां व्रीहिः तथा

५ धनुश्चिन्हाङ्कितं कपुस्तके नास्ति। ६ °वि° इति खपुस्तके नास्ति। ७ ख. स्व। १ ख. °थं°। २ क. स…नान्तरोपादानम्। ख. स…नान्तरोपदानम्। ३ धनुश्चिन्हाङ्कितं कपुस्तके नास्ति। ४ क.ख. °णान्ता भेदा°। ५ क.ख. य…। ६ °तु° इति कखपुस्तकयोर्नास्ति। ७ एतदन्तरं खपुस्तके पाठखण्डखिन्हम्। ८ ख. तपि।

वाह्याध्यात्मिकभेदाः । परिमितवाह्या ब्रह्मादिस्तम्बपर्यन्ताश्चतुर्दश[९] । [१०]आध्यात्मिकाश्च महदहङ्कारतन्मात्रेन्द्रियभूताख्यास्त्रयोविंशतिः । तस्मादेतेषामेकेन [११]संसर्गिणा भवितव्यम् । [१२]यत्रैषां संसर्गस्तदव्यक्तं कारणमस्तीति [१३]सामान्यतोदृष्टमनुमानम् ॥

'समन्वयात्' । भेदानामिति वर्तते । समन्वयोऽनुगमः । एकजात्यनुगमादित्यर्थः । य एकजात्यनुगता भेदास्तेषामेकमेव तथाभूतं कारणं दृष्टम् । यथा कटककेयूरादीनां सुवर्णपिण्डः, यथा वा शरावादीनां मृत्पिण्डः । एवमेषामपि वाह्याध्यात्मिकानां सुखदुःखमोहानुगतत्वादेकेन तथाविधेन भवितव्यम् । [१४]य एषां समुदायस्तत्प्रधानमिति सामान्यतोदृष्टम् ।

'शक्तितः प्रवृत्तेश्च' इति । इह कुलालादिशक्तिपूर्विका घटादीनां प्रवृत्तिर्दृष्टा नाशक्तिपूर्विका । [१६]एषाम[१७]पि वाह्याध्यात्मिकानां प्रवृत्ति[१८]र्दृश्यते । ततश्च [१९]प्राक् च प्रवृत्तेर्जनितया शक्त्या भवितव्यम् । यासौ शक्तिः सैवाव्यक्तभावमापद्यत इति सामान्यतो[२०]दृष्टम् ॥

'कारणकार्यविभागात्' इति । कारणस्य पूर्वभावि[२१]त्वात् पूर्वनिपातः । अल्पाच्तरस्य पूर्वनिपातस्यानित्यत्वम् । यत उत्पद्यते तत्कारणम्, यच्चोत्पद्यते तत्कार्यम् । यथा मृत्पिण्डघटयोर्जन्यजनकत्वेन पृथगर्थक्रियाकरणाच्च विभागो दृष्टः । अन्यथा घटस्योदकाहरणक्रिया या न सा मृत्पिण्डस्य, या मृत्पिण्डस्य न सा घटस्य । एवं व्यक्तस्य महदादेः कार्यत्वात्पृथगर्थक्रियाकरणाच्च विभागः । तस्मादस्य[२२] कारणेन भवितव्यम् । तच्चाव्यक्तात्किमन्यत् स्यादिति ॥

अस्मिन्[२३] व्याख्याने 'कार्यतस्तदुपलब्धेर्महदादि तच्च कार्यम्'

---

९ क °च्चतुर्दशः । ख. °च्चतुर्दश । १० आ° इति कपुस्तके नास्ति । ११ सं° इति कखपुस्तकयोर्नास्ति । १२ ख. ए° । १२ क.ख. सामान्यतो...नुमानम् । १४ क. °नुगा...दित्य° । ख. नुग...।दित्य° । १५ क.ख. यत । १६ क. एषाम...। १७ क. विग° । १८ ख. एतदनतरं °दृष्टं–इति पठति । १९ क. 'प्राक् च' इति नास्ति । पाठखण्डचिन्हम् । क.ख. °ष्टः । २१ क. °वितत्वात् । २२ क. कस्मादन्य° । २३ क. ...स्मिन् ।

इत्यनेनैव सिद्धत्वादन्यैरन्यथा[२४] व्याख्यायते। यदुपकरोति तत्कारणम्[२५], यदुपक्रियते[२६] तत्कार्यं तयोर्विभागात्, उपकार्योपकारकभावादित्यर्थः[२७]। तत्र कार्याणि[२८]..व्यादीनि शरीरस्थानि स्थानसाधनाः विभोगैः कारणान्युपकुर्वन्ति। कारणानि[२९] च वृद्धिक्षतसंरोहणपालनैः कार्याणि[३०]। बाह्यानि च कारणानि[३१] पृथिव्या[३२]..धृतिसङ्ग्रहपक्तिव्यूहनावकाशदानैः परस्परमुपकुर्वन्ति। तथा दैवमानुषतैर्यग्योनानि[३३] परस्परोपकारीणि। तत्र दैवम्, यथाकालं शीतोष्णपातवर्षागमैः[३४], मानुषतैर्यग्योनान्युपकरोति[३५]। मानुषमिज्याध्यागस्तुतिभिर्दैवं रक्षति[३६], पोषणभेषज्यैश्च[३७] तैर्यग्योनमुपकरोति[३८]। यथाध्यात्मिकानां बाह्यानां चोपकार्योपकारकभावो[३९] बुद्धिकृत इव दृश्यते तदस्य[४०] कश्चिद्व्यवस्थापिता स्यात्, कुतोऽयं विभाग इत्यन्यथानुपपत्तेः॥

'अविभागाद्वैश्वरूप्यस्य' इति। न विद्यते विभागोऽस्येत्यविभागः। अविभक्तादित्यर्थः। तस्माद्वैश्वरूप्यस्योपलब्धेरिति शेषः। इह लोकेऽविभक्तादेकस्मादिक्षुद्रव्याद्रसफाणितगुडखण्डशर्करादिवैश्वरूप्यं[४१] नानात्वं दृश्यते, तथैकस्माद्दुग्धाद्दधिमस्तुनवनीतघृतादिवैश्वरूप्यमुपलभ्यते[४२]। एवमाध्यात्मिकानां बाह्यानां च वैश्वरूप्यम्। तस्मादेषामविभक्तेनैकेन भवितव्यमिति सामान्यतोदृष्टम्॥

अन्यस्त्वाह—'अविभागे वैश्वरूप्यस्य' इति। अविभागो लयः, वैश्वरूप्यं जगत् नानारूपत्वात्। प्रलयकाले वैश्वरूप्यं क्व लीयते स्थित्यु-

---

२४ ख. °द्धय°। २५ क.ख. तत्क°। २६ °ते इति खपुस्तके नास्ति। २७ क. उपका...रक°। ख. उपका... ...रक°। २८ ख. कार्या°...। २९ क. का:..नि। ३० मदीयः पाठः। कखपुस्तकयोः पाल... ...का°। ३१ मत्पाठः। क. कात्मकानि। ख. का...नि। ३२ क. °थिव्य...धृति°। ३३ क. °ष...ग्या°। ख. °षयोंग्यो°। ३४ क.ख. °व...मः। ३५ ख. °न्या°। ३६ °ति—इति कखपुस्तकयोर्नास्ति। ३७ मत्पाठः। क. वा°। ख. पा°। ३८ क. पाठः खण्डितः, °ग्यो° इति नास्ति। ३९ एतदनन्तरं कपुस्तके पाठखण्डचिन्हम्। ४० ख. °द्य°। ४१ क. °व्यरस°। ४२ क. °स्तु°

त्पत्तिप्रलयाज्जगत इति। न चेश्वरे लयनं सम्भवति, तस्य निर्गुणत्वेनाभ्युपगमात्। तस्मादन्यथानुपपत्त्या[४३]स्ति तदेक[४४]मिति। तथा चाहुः—

प्रधानादानुपूर्व्येण सृष्टिर्लोकस्य संसरः।
प्र[४५]...प्रातिलोम्येन पुनस्तत्रैव सञ्चरः[४६] ॥ इति ॥१५॥



एषां हेतूनां प्रवर्तना[१]र्थमाह—

**कारणमस्त्यव्यक्तम्, प्रवर्तते त्रिगुणतः समुदयाच्च।**
**परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥१६॥**

'कारणमस्ति' इत्यादि ॥

यदि कारणमस्त्यव्यक्तं तत्कथं प्रवर्तत इत्याह—'त्रिगुणतस्समुदयाच्च'[२] इति। यदा प्रकृतिस्था गुणा[३]स्साम्येन प्रवर्तन्ते तदा (त्रीनेवाधिकृत्य[४] प्रवर्तन्ते[५] नैकैकमित्यर्थः। यदा वैषम्ये[६]ण प्रवर्तन्ते तदा)[७] कार्यं कारणारब्ध[८]त्वात् समुद[९]यात् प्रवर्तते। समन्तादुदयो यस्य गुणस्य तमधिकृत्येत्यर्थः, शेषन्यकृतशक्तिकत्वात्[१०]। यदि समु[११]दयादव्यक्तं प्रवर्तते तस्मादुत्पन्नं[१२] तदन्य ... ...स्मान्न भवति ॥

शुक्लेभ्यः कृष्णेभ्यो वा तन्तुभ्यः शुक्लः कृष्णो वा पटो भवतीत्याह—

---

४३ °प° इति खपुस्तके नास्ति। ४४ ख. °द°। ४५ प्र° इति कपुस्तके नास्ति। 'प्रधानात्' इति पठनीयम्?। ४६ मत्पाठः। क. चत्वरः। ख. चन्चरः।

१ क ख. प्रवृ...ना°। २ क.ख. '...तस्समुदायाच्च'। ३ गुणा° इति कखपुस्तकयोर्नास्ति, किन्तु पाठखण्डचिन्हम्। ४ ख. पाठखण्डचिन्हम्। °कृत्य इति नास्ति। ५ ख. पाठखण्डचिन्हम्। °र्तं° इति नास्ति। ६ ख. पाठखण्डचिन्हम्। वैषम्ये °इति नास्ति। ७ धनुश्चिन्हाङ्कितं कपुस्तके नास्ति। ८ क.ख. पाठखण्डचिन्हम्। °ब्ध° इति नास्ति। ९ क.ख. °दा°। १० मत्पाठः। क. शेष...कृतशक्तित्वात्। ख. शेषन्येकृतशक्तिकत्वात्। ११ क.ख. °दा°। १२ क. °न्नः।

'परिणामतः'[13] इत्यादि। पूर्वस्यामवस्थायामवस्थान्तरं परिणामः, तस्माद्धेतोः प्रवर्तते। यथा कणिकायाः सूक्ष्माया मूलकः शाखाप्रशाखादिप्रवृद्धो महान्वनस्पतिर्व्यक्तो भवति, एवमव्यक्ताद्व्यक्तं परिणमति॥

यद्येवमेकरूपादुत्पन्नस्य त्रैलोक्यस्य कथमनेकरूपत्वमित्याह—'सलिलवत्प्रतिप्रतिगुणाश्रयविशेषात्' इति। सलिलेन तुल्यं वर्तत इति सलिलवत्। एकैकं प्रति गुणाः प्रतिप्रतिगुणाः। त एवाश्रयास्तेषां यो विशेषस्तस्माद्धेतोः प्रवर्तन्ते। यथा सलिलमन्तरिक्षादेकरसमपि[14] तदेकस्य[15] कटूवम्लादेर्गुणस्याश्रयभूतस्य विशेषान्नानारसं वर्तते, एवमव्यक्तमपीति गुणात्मकत्वादेकैक[16]गुणाश्रयविशेषान्नानारूपं प्रवर्तते। तत्र सत्त्वस्य कृतेराश्रयस्य विशेषाद्दे[17]वभावेन वर्तनम्, रजस आश्रयस्य विशेषान्मानुषभावेन, तमस आश्रयस्य विशेषात्तिर्यग्योनिभावेनेति ॥१६॥



एवमव्यक्तस्यास्तित्वं प्रवृत्तिं च प्रसाध्य पुरुषास्तित्वं प्रसाधयितुमाह—

संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च ॥१७॥

'संघातपरार्थत्वात्' इत्यादि। संहन्यत इति संघातः। संघातश्चासौ परार्थश्चेति संघातपरार्थः[1]। संघातत्वं हेतुः परार्थत्वं साध्यम्। इह लोके संघातवाह्याः शयनासनादयो ये ते परार्था[2] दृष्टाः। ते हि देवदत्तस्य परस्यार्थं कुर्वन्ति न स्वार्थम्। एतेऽप्याध्यात्मिका महदादयः[3] शरीरसंज्ञकाः संघाताः, तैः परार्थैर्भवितव्यम्[4]। न च पुरुषव्यतिरिक्तोऽन्यः[5] परोऽस्ति[6], पुरुष एव पर इ···न्यतोदृष्टम्[7]॥

१३ क. ···न्नामतः। ख. ···णामतः। १४ ख. ०घ०। १५ ख. च तत्।
१६ ख. ०क० इति नास्ति। ७१ क. ०दे०।

१ ख. ०र्थाः। २ ख. पर···ा। ३ क. माह...दयः। ख. मह...दयः।
४ ख. तै...रार्थैर्भव०। क. तैःपरार्थैरपि भवि०। ५ क.ख. ०व्य...क्तो।
६ क. पुरुषोऽस्ति। ७ इत्यन्यतोदृष्टम् इति पठनीयम्?

ननु महदादिभूतपर्यन्तं शरीर[८]मेव पुरुषो नान्यः कश्चिदित्यत्राह[९]— ' त्रिगुणादिविपर्ययात् ' इति । आदिशब्देनाविवेक्यादयः पञ्च धर्मा दृश्यन्ते । तथाहि तद्विपरीतः पुमानित्युक्तम् । ततश्च तद्विपरीतत्वात्पुंसः कथं महदादिमात्रमेव पुरुषः । [१०]तस्माद्व्यतिरिक्तः पुरुषो यस्यार्थका [११]इमे संघाताः ॥

'अधिष्ठानात्' इति । [१२]अधितिष्ठत्यस्मिन्नित्यधिष्ठानम् । महदादिभूतपर्यन्तं शरीरमिह लोके यदधिष्ठानं तत्पराधिष्ठितं दृष्टम्, यथा रथादि । दृश्यते चाधिष्ठानं शरीरम् । [१३]तस्मादस्याधिष्ठात्रा भवितव्यम् । योऽसावधिष्ठाता स पुरुषः, नान्तःकरणमधिष्ठातृ, तस्याचेतनत्वादिति सामान्यतोदृष्टम् ॥

'भोक्तृभावात्' इति । भोक्तृत्वादित्यर्थः । इह लोके भोग्यं दृष्ट्वा भोक्तानुमीयते । दृश्यते महदादिपर्यन्तं भोग्यम्, तस्मादस्यापि भोक्त्रा भवितव्यमिति सामान्यतोदृष्टम् । न चान्तःकरणं भोक्तृ, तस्याचेतनत्वाद्भोग्यत्वाच्च । यश्च भोक्ता स एव पुरु[१४]षः सात्मकं जीवच्छरीरं प्राणादिमत्त्वात् । अस्मिन् देहे योऽयमात्मा समानजातीयानेकवस्त्वन्तरसहायः, प्रतिनिय[१५]तैर्जन्मादिभिर्युज्यमानत्वात् मनोवत् ॥

'कैवल्यार्थं [१६]प्रवृत्तेश्च' इति । कैवल्[१७]यं मोक्षः । तदन्यार्[१८]थप्रधानस्यैषा प्रवृत्तिः । तथाहि—प्रधानं बुद्ध्यात्मना परिणमति । बुद्धेश्चाष्टावंशानि । तेषु च ज्ञानं कैवल्यम् । तत्र यदि पुरुषो न स्यात्तदा तदर्था प्रवृत्तिर्न भवेत् । तस्मादन्[१९]यथानुपपत्त्या पुरुषोऽस्ति ॥

तत्र सिद्धे पुंसि विवादाः । एक एवायं पुरु[२०]षः सर्वशरीरेषु स्थित

८ क.ख. ···रमेव । ९ क. °त्याह । १० क. तै° । ११ 'इमे' इति कखपुस्तकयोर्नास्ति । १२ °ति° इति खपुस्तके नास्ति । १३ क. त° । १४ क.ख. °षा । १५ °भि° इति कखपुस्तकयोर्नास्ति । १६ क.ख. °र्थं° । १७ क.ख. °ल्य । १८ ख. °र्थं° । १९ °था° इति खपुस्तके नास्ति । २० ख. पुरु° इति नास्ति ।

इत्येके[21]। सर्वे काया उपनतानेकात्मानस्स्वात्मकत्वात्[22], योगिशरीरवृंदवत् प्रतिशरीरमनेकः पुरुष इत्यपरे। एक[23] एव पुराणः पुरुषः[24], तस्मादग्नेरिव विष्फुलिङ्गाः[25] प्रतिशरीरं पुरुषा आविर्भूता इति वेदान्तवादिनः[26] ॥१७॥



अत्राह—

जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥

'जननमरणकरणानाम्' इत्यादि। करणं चक्षुरादीन्द्रियम्। देहेन्द्रियादेरधिष्ठानस्योत्पत्तिविनाशौ। तद्योगात्पुरुषस्य जननमरणेऽपि व्यवस्थाप्येते। स्वतः पुरुषस्य ते न सम्भवतः। कुतः?—नित्यत्वात्। तत्र यद्येकः[1] पुरुषः स्यात्तदैकस्मिन् जायमाने म्रियमाणे[2] वा सर्वेषां जननमरणे स्याताम्। तथैकस्मिंश्चक्षुष्मति श्रोत्रवति वा सर्वेऽन्धा (बधिरा वा, पश्येयुः शृणुयुर्वा। एकस्मिन्नन्धे[3]) बधिरे वा तथा स्युः। न चैवम्, जननादीनां प्रतिनियमात्। तस्मादन्यथानुपपत्त्या पुरुषबहुत्वं सिद्धम्॥

'अयुगपत्प्रवृत्तेश्च' इति। यद्येकः पुरुषः स्यात्तदैकेनाधिष्ठात्राधिष्ठिते देहे, धर्माधर्मयोरर्थानर्थयोः सुखदुःखयोर्वा प्रवृत्ते[4], सर्व एव युगपत्प्रवर्त्तेरन्। न चैवमित्यन्यथानुपपत्तिः॥

'त्रैगुण्यविपर्ययाच्च' इति। त्रय एव गुणास्त्रैगुण्यम्। तस्य

---

२१ ख. स्थितं इत्येते। २२ क. उपनतानेकात्मा···स्यात्मक°। ख. उपनतानेकात्म···स्सात्मक°। २३ क. एकं। २४ ख. ···णः। २५ क. विष्फुन्ति···प्रति°। ख. विष्फुलि··प्रति°। २६ मत्पाठः। क.ख. इति···न्तवादिनः।

१ क. य···द्येकः। २ क. न्द्रियं मनो। ३ धनुश्चिन्हाङ्कितं खपुस्तके नास्ति। ४ क.ख. °त्तेः।

विपर्ययोऽन्यथात्वम् । अधिष्ठानस्य त्रिगुणात्मकत्वात्तद्योगात्पुरुषोऽपि त्रिगुणात्मक[5] इत्युच्यते । तत्र यद्येकः पुरुषः स्यात्तदैकस्मिन् सात्त्विके राजसे तामसे[6] वा, सर्व एव तथाविधाः स्युः । न चैवम्, गुणानां विपर्ययदर्शनादित्यन्यथानुपपत्तिः ॥

पुराणपुरुषादग्नेरिव विष्फुलिङ्गाः[7] प्रतिशरीरं पुरुषा इत्यस्मिन्नपि दर्शने पुरुषबहुत्वमस्त्येव । तेषां परस्परविलक्षणत्वात् ते पुराणपुरुषाद्भिन्ना भिन्ना वेति दर्शनद्वयम् । तदन्यत्र विचारितत्वादिह ग्रन्थगौरवभयान्नोपन्यस्तमस्माभिरिति ॥१८॥



एवं पुरुषबहुत्वं प्रसाध्य तद्धर्मान् कथयितुमाह—

तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यम्माध्यस्थं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥

'तस्माच्च विपर्यासात्' इत्यादि । यः प्रागुक्तो विपर्ययः—त्रिगुणमविवेकि विषयः—इत्यादिना, तस्मात्साक्षित्वा[1]दयो धर्माः पुरुषस्य सिद्धाः । तत्र निर्गुणत्वा[2] पुरुषस्याप्रसवधर्मित्वादकर्तृत्वम् । यश्चाकर्ता स भवत्युदासीनः । सप्तविधं चास्यौदासीन्यम् । तथा चोक्तम्—

पश्यति शृणोति सर्वं करोति स्थितिं प्रसङ्गं च नापि ।
स्वतो न परतो ...नोभयतश्चाप्युदासीनः ॥ इति ॥

यश्चोदासीनः स साक्ष्यपि भवति प्रधानसम्बन्धिनः क्रियाकलापस्य, निर्गुणत्वात् ॥

कैवल्यं केवलभावात् । चेतनत्वाच्च द्रष्टृत्वमिति ॥

ननु च यद्यकर्ता तत्कथं—भोक्तृभावादस्ति पुरुषः—? तथा चाहुः—

---

५ ख. त्रिगुण । ६ ख. °दर्शादित्य° । ७ क. त्रिष्णुलिङ्गाः ।

१ ख. °त्विका° । २ क.ख. सं ।

*बालहुताशनतरवः स्वयमकृतानां यथा हि भोक्तारः ।*

*पुरुषोऽपि विषयफलानां स्वयमकृतानां तथापि भोक्ता ॥इति॥*

इत्युक्तमकर्तुरपि भोक्तृत्वमस्येति ॥१९॥



ननु च यद्यचेतनमव्यक्तं कथं देहेन्द्रियसंज्ञमधिष्ठानं धर्माधर्मादिषु प्रवर्त्तते, तस्याचेतनत्वादित्याह—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।

गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥२०॥

'तस्मात्तत्संयोगात्' इत्यादि । तेन पुरुषेण यः संयोगस्तस्माद[1]चेतनं चेतनावदिव भवति । यथाग्निसंयोगाल्लोहमणिरित्युच्यते । लिङ्ग महदादिसूक्ष्मपर्यन्तं वक्ष्यति ॥

यदि तदेव त्रिगुणात्मकं कर्तृ न पुमान्, कथं पुरुषो गच्छतीत्युच्यत इत्याह—'गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः' इति । गुणानां कर्तृत्वं न पुरुषस्य । यथा पुरुषसंयोगादचेतनं लिङ्गं चेतनावदिव भवति, तथा गुणात्मकलिङ्गसंयोगादकर्तापि सन् कर्तेव भवति । उदासीनः यथा स्वामी स्वयमयोद्धापि योधभृत्यसंयोगाद् योद्धेति व्यपदिश्यते तथा पुरुषोऽप्युपचारेण कर्तेति ।

तथाचोक्तम्—

*प्रवर्त्तमानान् प्रकृतेरिमान् गुणांस्तमोऽभिभूतो विपरीतदर्शनः ।*

*अहं करोमीत्यबुधो[2]ऽभिमन्यते तृणस्य कुब्जीकरणेऽप्यनीश्वरः ॥इति॥ २*



१ °स्मा° इति कपुस्तके नास्ति । २ ख. °द्धो° ।

ननु प्रधानपुरुषयोः किं (कर्तृत्वं)[1] चैतन्यार्थमेव संयोगः, किं वान्यार्थमपीत्याह—

पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पंग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥२१॥

'पुरुषस्य' इत्यादि । पुरुषस्यार्थो द्विविधः, विषयोपभोगः कैवल्यं च । तदुभयं प्रधानेन सम्पाद्यम् । विषयोपभोगश्च प्रधानविभूतिमन्तरेण न सम्भवति, इति दर्शनार्थं पुरुषः प्रधानेन संयुज्यते । मानं स्वां विभूतिं दर्शयितुमसमर्थात्पुरुषेण संयुज्यते (?) । दृष्ट्वा स सर्वां विभूतिमनुभूय विरसत्वाद्[2] विरक्तः पुरुषः प्रधानेन त्यज्यते । त्यक्तस्य कैवल्यमित्यतो दर्शनार्थं कैवल्यार्थं च द्वयोरपि[3] संयोगो मत्स्योदकवदुदुम्बरमशकवच्च ॥

' पंग्वन्धवत् ' इति । दृष्टान्तः । पङ्गुः सचक्षुः पश्यति पन्थानं न संचरति, अन्धोऽपि संचरति न पश्यति पन्थानम् । तयोः स्वार्थ[4]प्रष्टयोर्ग्रामप्राप्त्यर्थः सम्बन्धो भूतः । तत्र पङ्गुरन्धस्कन्धमारुह्य गतिमान्, अन्धोऽपि द्रष्ट्रधिष्ठानाद् दृष्टिमान् जातः । ग्रामप्राप्तयोश्च तयोर्वियोगः । एवं पुरुषो निष्क्रियः प्रधानेन संयुज्य तद्विभूतिदर्शनाय देवादिषु संचरति । प्रधानं निश्चेतनमपि पुरुषाधिष्ठानाच्चेतनावदिव द्वयमपि सम्पादयति । तस्मात्पंग्वन्धवदुभयोरपि संयोगः ॥

ननु च संयोगमात्रेण कथं दर्शनं कैवल्यं चेत्याह–'तत्कृतः[5] सर्गः' इति । संयोगकृतो महदादिग्रामोत्पाद इत्यर्थः ॥२१॥



१ भ्रनुश्चिन्हाङ्कितं न पठनीयम् ? २ मत्पाठः । क. विरक्ताद् । ख. विरसक्ताद् ।
३ ख. द॰ । ४ क.ख. सा॰ । ५ क. तत्कृतः ।

तमेव[1] दर्शयन्नाह—

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।

तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥२२॥

'प्रकृतेर्महान्' इत्यादि । प्रकृतिः प्रधानं कारणमव्यक्तं गुणसाम्यं तमोबहुलमव्याकृतमिति प्रकृतिपर्यायाः । ततो महानुत्पद्यते[2] स तु[3] तमोबहुलः । महान् बुद्धिर्मतिः प्रत्यय उपलब्धिरिति बुद्धिपर्यायाः । ततोऽहङ्कार उत्पद्यते । स तु रजस्तमोबहुलः । अहङ्कारः सुपर्णपणि[4] (?) स्तत्पुरुष इत्यहङ्कारपर्यायाः ॥

'तस्माद्गणश्च षोडशकः' इति । तस्मादहङ्कारात् षोडशको गण[5] उत्पद्यते । एकादशेन्द्रियाणि पञ्च तन्मात्राणीत्यर्थः । तानि हृषीकाणीन्द्रियाणीति पर्यायाः । सूक्ष्मा अतिशया अणवः ( विषा[6] ) इति तन्मात्रपर्यायाः ॥

'तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि' इति । षोडशाद् गणाद्यानि[7] पञ्च तन्मात्राणि तेभ्य एकोत्तरवृद्ध्या पञ्च महाभूतानि भवन्ति । तत्र शब्दतन्मात्रादाकाशमेकगुणम्[8] । शब्दतन्मात्रप्रतिसंहितात्[9] स्पर्शतन्मात्राद् द्विगुणो वायुः । ताभ्यां प्रतिसंहिताद्रूपतन्मात्रात् त्रिगुणं तेजः । तैः प्रतिसंहिताद्रसतन्मात्रात्[10] चतुर्गुणा आपः[11] । चतुर्भिः प्रतिसंहिताद् गन्धतन्मात्रात्[12] पञ्चगुणा पृथिवीति[13] । एतैराका[14]शादयः स्थूला विशेषा उच्यन्ते,येष्ववसितानि[15] चतुर्विंशतितत्त्वानि ॥२२॥



१ क. °वं । २ ख. °त्पा° । ३ ख. कृ । ४ क. सपर्णवन्नि° । ५ क. गुण । ६ धनुश्चिन्हाङ्कितं कपुस्तके नास्ति । ७ क. गु° । ८ क.ख. °केम° । ९ क. °त् । १० ख. °समात्रात । ११ मत्पाठः । क.ख चतुर्गुणो रूपः । १२ क.ख. °न्मात्रे । १३ ख. °थु° । १४ °शा° इति कखपुस्तकयोर्नास्ति । १५ क. येष्वसितानि । ख. योष्वसितानि ।

बुद्धेर्लक्षणमाह—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥२३॥

'अध्यवसायः' इत्यादि । शब्दादिषु विषयेऽध्यवसायश्शब्दोऽयं यावत् गन्धोऽयमिति सुबुद्धेर्लक्षणम् (?) । तस्याश्चाष्टौ रूपाणि ॥

'धर्मो ज्ञानं विराग ऐश्वर्यम्' इति । तत्र योऽयमनिर्विषयमनुष्ठानात्मकोऽध्यवसायस्स धर्मः । यमाः पञ्च नियमाश्च । यथोक्तं सांख्यप्रवचने 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' । 'शौचसन्तोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः' इति । तत्र सन्तोषस्[1]संनिहितसाधनाभ्याशादधिकस्यानुपादित्सा । तपो जिघत्सापिपासाशीतोष्णस्थानसाधनजयः काष्ठमौनाकारमौने[2], व्रतानि च कृच्छ्रचान्द्रायणादीनि । स्वाध्यायो मोक्षशास्त्राध्ययनं प्रणवजपो वा । ईश्वरप्रणिधानं विशिष्टदेवताराधनम् । असंसारिभिस्तुल्यवृत्तित्वादिति । तद्विपरीतानुष्ठानमधर्मः । पञ्चविंशतितत्त्वानां स्वसंज्ञालाक्षण्यकत्वप्रयोजनावधारणं ज्ञानम्, गुणपुरुषान्तरज्ञानम् । शे[3]षमज्ञानम् । विषयशरीरेन्द्रियेभ्यो दोषदर्शनाद्वैमुख्यं विरागः । तेष्वभिलाषो रागः । ऐश्वर्यमष्टगुणम्— अणिमा, महिमा, लघिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वं, वशित्वम्, यत्रकामावशालित्वं[4] चेति । तत्राणिमाणुत्वम्, येन गुणेन सूक्ष्मो भूत्वा विचरति । कार्ये कारणोपचारादणिमेत्युच्यते । उत्तरत्राप्येवं योज्यम् । लघिमा लघुत्वम्, येन वायुवल्लघुतरो भवति । महिमा महत्वम्, येन भुवनेषु धर्मादिप्राप्तिः, येन गुणेनेषितस्य प्रापणम् । प्राकाम्यं प्रचुरकामिता येनैकमनेकं प्रा[5]काम्यतेऽनेकं चैकम् । ईशित्वं प्रभुता, (येन स्थावरादीनि भूतानि सन्देशकारीणि भवन्ति । वशित्वं वशिता,) [6]येन स्वतन्त्रश्चरति ।

१ क.ख. °षासन्नि° । २ मत्पाठः । क. काष्ठमेनाकारमौनौ । ख. काष्ठमेनाकारमौने । ३ ख. शोष° । ४ यत्रकामावसायित्वमिति पठनीयम् ? ५ प्रा° इति कपुस्तके नास्ति । ६ धनुश्चिन्हाङ्कितं खपुस्तके नास्ति ।

यत्रकामावशायित्वं[7] ([8]कामेनेच्छयावशेतुं शीलं यस्य स यत्रकामावशायी। तस्य भावः यत्रकामावशायित्वम्)। अनेकार्थत्वाद्धातूनां 'शी' तिष्ठतौ[9] वर्त्तते। येन गुणेन दिव्यन्तरिक्षे[10] भूमौ वावस्थायित्वमित्यर्थः।

'सात्त्विकमेतद्रूपम्' इति[11]। सत्त्वतमोबहुलत्वात्। बुद्धेर्यदा सत्त्व[12]मुत्कटं भवति तदैतच्चतुष्टयं भवतीत्यर्थः।

'तामसमस्माद्विपर्यस्तम्' इति। उत्कटलक्षणात् धर्मादिचतुष्टयाद्विपरीतं तमस्युद्रिक्ते भवतीत्यर्थः। अधर्मोऽज्ञानमवैराग्यमनैश्वर्यं चेति ॥ २३ ॥



अहङ्कारलक्षणमाह—

अभिमानोऽहङ्कारः, तस्माद्द्विविधः प्रवर्त्तते सर्गः।
एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव ॥२४॥

'अभिमानः'[1] इत्यादि। अभिमतिरभिमानः। रूपादिषु विषयेष्वभिमानो रूप[2]वानहम्, ममैते विषयाः, इत्यहङ्कारलक्षणम् ॥

तस्मादभिमानलक्षणादहङ्कारात् '[3]द्विविधः प्रवर्त्तते सर्गः' इति। सृज्यत इति सर्गः ॥

तमेव द्विविधं[4] दर्शयितुमाह—'एकादशकश्च गणः' इति। एकादश परिमाणमस्येत्येकादशः श्रोत्रा[5]दिर्गणः ॥

'तन्मात्रापञ्चकं च' इति। तन्मात्र[6]शब्दादिस्वरूपमात्र इत्यर्थः। तन्मात्राणि शब्दस्पर्शरूपरसगन्धाः। मात्राग्रहणं भूतसंश्लेषनिवृत्त्यर्थम्। भूतेष्वपि शब्दादिसम्भवात् ॥२४॥

---

७ मत्पाठः। ख. °च्छया वशित्वं। ८ धनुश्चिन्हाङ्कितं कपुस्तके नास्ति। ९ क. गीतिषु। १० ख. °रीक्षे। ११ °ति इति कखपुस्तकयोर्नास्ति। १२ °त्त्व° इति खपुस्तके नास्ति।

१ मत्पाठः। क.ख. 'अभिमान्म्'। २ ख रूप° एतदनन्तरं—अभिमामो रूपवानाह ममैत विषधा इत्येतदहङ्कार°। ३ क.ख. विविधः। ४ क. विविधं। ५ °त्रा इति खपुस्तके नास्ति। ६ मत्पाठः। क. तस्मादत्र। ख. तस्मात्र°।

स चाहङ्कारस्त्रिविध इति दर्शयन्नाह—

सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात् ।
भूतादेस्तन्मात्रः स तामसः, तैजसादुभयम् ॥२५॥

'सात्त्विकः' इत्यादि । यदा सत्त्वमुद्रिक्तं [1]तदाहङ्कारो वैकृताभिमानो भवति, रजश्चोद्रिक्तं तैजसः, तमश्चोद्रिक्तं भूतादिरिति । तत्र वैकृतादेकादशको गणः प्रवर्त्तते । स च सात्त्विकः सत्त्वबहुलः, स्वविषयग्रहणत्वात् ॥

भूतादेस्तामसादहङ्कारात्तन्मात्रः स तामसः, तमोबहुलत्वात् । ततस्तामसात्तन्मात्रात्[2] गणात् तामसो भूतगणः प्रवर्त्तते ॥

([3] 'तैजसादुभयम्' इति । एतदाशयः—पञ्चकञ्चैतदुभयमपि प्रवर्त्तते) । आदिकाल उभयत्राप्यस्य सहायत्वात् । वैकृतभूतादी द्वावपि प्रकाशस्थितिशीलत्वात् न क्रियाशीलौ । ततस्तैजसमहङ्कारं क्रियाशीलं सहायमपेक्ष्यैकादशकं पञ्चकं च मलाजनयत्(?) इति ॥२५॥

कः पुनरेकादश इत्याह—

बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।
वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः ॥२६॥

'बुद्धीन्द्रियाणि' इत्यादि । द्विविधमिन्द्रियम् । तत्र चक्षुर्येन दृश्यते । श्रोत्रं येन श्रूयते । त्वग्यया स्पृश्यते । रसनं येन रस्यते । नासिका यया घ्रायते । ता आख्या येषामिन्द्रियाणामिति शब्दप्रधानो निर्देशः । तानि चक्षुःश्रोत्रत्वग्रसनानासिकाख्यानि पञ्च । बुद्धिपूर्वकपर्यालोचनमिति[1] बुद्धीन्द्रियाण्याहुः सांख्याचार्याः । शब्दवशादत्राक्रमः[2] कृतः । क्रमस्तु

---

१ क.ख. यदा° । २ मत्पाठः । क.ख. तामसस्तन्मात्रात् । ३ धनुश्चिन्हाङ्कितं कपुस्तके नास्ति ।

१ क. °कमर्थालोचन° । २ क.ख. °दन्या° ।

श्रोत्रत्वक्चक्षुरिति ॥

'वाक्पाणिपादपायूपस्थान्'[3] इति । कर्मेन्द्रियाणि कर्माभिनिर्वर्तनात्[4] । अस्मादेव प्रयोगादुपस्थशब्दः पुंलिङ्गोऽप्यस्तीति ज्ञायते । स च स्त्रैणः[5] पौरुषेयश्च । तत्र वागिन्द्रियं कण्ठस्थम् । अन्यानि प्रसिद्धान्येव ॥ २६ ॥

एकादशकमिन्द्रियं[1] दर्शयन्नाह—

**उभयात्मकमत्र मनः, सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।**
**गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥**

'उभयात्मकमत्र मनः' इत्यादि । अत्रेत्यस्मिन्निन्द्रियवर्गे मन उभयात्मकमुभयस्वभावम् । बुद्धीन्द्रियाणां कर्मेन्द्रियाणां च स्वस्वविषयग्रहणकाले बुद्धीन्द्रियं[2] कर्मेन्द्रियं चेत्यर्थः । उभयत्राप्यस्य व्यापारादितिलक्षणं तदित्याह—सङ्कल्पयतीति सङ्कल्पकम्, इदं नेदमिति ॥

कथमिन्द्रियमित्याह —'इन्द्रियं च साधर्म्यात्' इत्यादि । इन्द्रियैस्तुल्यत्वादित्यर्थः । यथा[3]न्यदि[4]न्द्रलिङ्गं तथा मनोऽपीत्यर्थः ॥

तत्रैकस्मादहङ्कारादुत्पन्नानां कथं स्वरूपभेदः ? । यच्छ्रोत्रादिबुद्धीन्द्रियम्[5], तत् प्रतिनियतविषयं नेतरविषयमपि । यद्वागादि कर्मेन्द्रियं तत् प्रतिनियतकर्म, नेतरकर्मापि । मनश्चोभयात्मकम्, नैकात्मकमित्याह—'गुणपरिणामविशेषान्नानात्वम्' इति । अहङ्कारस्था ये गुणाः सत्त्वादयस्तेषामन्योऽन्याभिभवाश्रया (द्विद्वारेण यः परिणामविशेषस्तत एवैषां नानात्वम्[6] । त एव हि गुणाः परि[7]) णामविशिष्टा इन्द्रियव्यपदेशभाजो[8] नानाविषया भवन्ति । कथं देशनियमो वृत्तिनियमश्च ? तत्र त्वगिन्द्रियं सर्वशरीरस्थितबाह्याभ्यन्तरवृत्ति, चक्षुःश्रोत्रघ्राणरसनानि शिरसि बहिः

---

३ °न् इति कखपुस्तकयोर्नास्ति । ४ क. °भिवर्त° । ५ ख. °ण ।

१ ख. °य । २ ख. °य । ३ क.ख. तथा° । ४ ख. °न्दी° । ५ क. °यम्°
६ °ना° इति खपुस्तके नास्ति । ७ धनुश्चिन्हाङ्कितं कपुस्तके नास्ति ।
८ क. °जौ ।

पृथक् पृथगवस्थितानि वाह्य[९]वृत्तीनि। वागास्ये स्थिता। पाण्यादयश्च[१०] बाहिरधस्तात् पृथक् पृथगवस्थिता बहिःकर्मविषयाः ॥

इत्यत्राह—'बाह्यभेदाश्च' इति। ये चान्ये विषयभेदा देशनियम-वृत्तिनियमाभ्यां तेऽपि गुणपरिणामविशेषा एव। नात्रान्तरा कारण-मस्ति ॥ १७ ॥

---

एषामिन्द्रियाणां कस्य का वृत्तिरित्याह—

शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥

'शब्दादिषु' इत्यादि। आदिशब्देन शब्दस्पर्शरूपरसगन्धाः। तेषु यथाक्रमं पञ्चानां श्रोत्रादीनां बुद्धीन्द्रियाणामालोचनमात्रं वृत्तिरिष्यते सांख्याचार्यैः। श्रोत्रादीनि हि विषयस्य प्रकाशनमात्रं कुर्वन्ति, निश्चयं तु बुद्धिः। तथा हि बुद्ध्यवसितमर्थं पुरुषः चेतयत इति सिद्धान्तः। कर्मेन्द्रियाणामपि वागादीनां यथाक्रमं वचनादानादीनि वृत्तयः कर्माणि। तत्र वागिन्द्रियस्य नानाविधवर्णोच्चारणं कर्म, आदेयस्यादानं पाण्योः, विहरणं देशान्तरगमनं पादयोः, उत्सर्ग आहारमलस्योत्सर्जनं पायोः, आनन्दनमानन्दो ह्लादः शुक्रविसृष्टिसंस्थप्रसुखं तदुपस्थेन्द्रिय-वृत्तिः ॥ २८ ॥

---

बुद्ध्यहङ्कारमनसां का वृत्तिरित्याह—

स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥

'स्वालक्षण्यं वृत्तिः' इत्यादि। स्वात्मीयं लक्षणं यस्य तत्

---

९ ख. ०ह्य० । १० क.ख. वा० ।
क.ख. ०द० । क.ख. ०कं० ।

स्वलक्षणम् । तस्य भावः स्वालक्षण्यम् । तदेव वृत्तिः ॥

'त्रयस्य' इति । बुद्ध्यहङ्कारमनसामि[1]त्यर्थः । अध्यवसायो बुद्धेः, अभिमानोऽहङ्कारस्य, सङ्कल्पो मनसः[2] । त एवाध्यवसायाभिमानसङ्कल्पास्त्रयस्य वृत्तिः । एषां च बुद्ध्यादीनां त्रयोदशानां चतुर्विधा वृत्तिः, असामान्यायुगपत्क्रमश्चेति ( ? ) ॥

तत्रासामान्यां[3] दर्शयितुमाह — 'सैषा' इति । येयमुक्ता वृत्तिः सैषा भवत्यसामान्या । या यस्य सा तस्यैव नान्येषामपीत्यर्थः । श्रोत्रस्य यच्छब्दप्रकाशनं तच्छ्रोत्रस्यैव, नान्येषां त्वगादीनां द्वादशानाम् । एवं सर्वत्र योज्यम् ॥

सामान्यामाह[4]— 'सामान्यकरणवृत्तिः' इति सामान्या चासौ करण[5]वृत्तिश्चेति सामान्यकरणवृत्तिः ॥

'प्राणाद्या वायवः पञ्च' इति । प्राणा आद्या येषां वायूनां ते प्राणाद्याः । प्राणापानव्यानोदानसमाना इति पञ्च वायवः । तत्र प्राणो[6] यो मुखनासिकाभ्यां निर्गच्छति । यो नाभेरधः स्थितः सोऽपानः । येन कायेऽग्निर्दीपित आहारं[7] च[8] पचति स समानः । यो नाभिदेशादुद्यतशिरोगतिर्नादं[9] जनयति स उदानः । यः सर्वशरीरं व्याप्य[10] स्थितः स व्यानः । एते त्रयोदशानामपि करणानां सामान्यवृत्तिः ॥ २९ ॥



करणप्रभाविकत्वाद्वायूनां युगपत्क्रमशो[1] वृत्तिमाह—

युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च निर्दिष्टा ।
दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥

---

१ ख. °दि° । २ क. मान° । ३ क. तत्र सामान्यं । ४ क. °न्य° ५ °ण° इति खपुस्तके नास्ति । ६ ख. °गाः । ७ क. अहा° । ८ ख. च इति नास्ति । ९ ख. °दभं । १० ख. °प ।

१ ख. °शा ।

'युगपत्' इत्यादि । 'चतुष्टयस्य तु' इति । तुशब्दो विशेषणार्थः । बुद्धिरहङ्कारो मनश्चक्षुरित्येतस्य चतुष्टयस्यैकस्मिन् रूपे युगपद्वृत्तिः । यथान्धकारे विद्युत्संपाते कृष्णसर्पसन्दर्शने[2] युगपदालोचनाध्यवसाया-भिमान[3]सङ्कल्पनानि भवन्ति । तथा हि चक्षुषालोचितं बुद्ध्याध्यवसितमहङ्कारेणात्मीकृतं मनसा सङ्कल्पितमिति ॥

'क्रमशश्च तस्य' इति । चतुष्टयस्य क्रमेण कदाचिद्वृत्ति[4]रिष्टा । मन्दप्रकाशे स्थाणुपुरुषोचितामूर्ध्वतां दृष्टवतः किं स्थाणुः पुरुष इति विकल्पः । तत्राकुञ्चनप्रसारणात् पुरुष इत्यध्यवसायः । तत आत्मीकर-णा[5]दभिमान इति ॥

येय (मुभय)[6] थावृत्तिः सा क[7]स्मिन् विषय इत्याह –'दृष्टे' इति ॥ अदृष्टे तर्हि नास्तीत्याह–'तथाप्यदृष्टे' इति । तथाप्य(दृष्टे[8])दृष्टे[9]ऽपि वृत्तिः ॥

किन्तु न चतुष्टयस्य तर्हीत्याह–'त्रयस्य' इति । बुद्ध्यहङ्कारमनसामित्यर्थः । तत्रापि तत्पूर्विका[10] श्रोत्रादिपूर्विकेत्यर्थः । यथा स्मर्तव्यमनुस्मरतः सङ्कल्पाभिमानाध्यवसाया भवन्ति ॥ ३० ॥



अथ यदेतच्चतुष्टयं तत्किं युगपत् परस्परसव्यपेक्षं स्वां स्वां वृत्तिं प्रतिपद्यते किं वा निरपेक्षमित्याह—

स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहैतुकीं वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ॥ ३१ ॥

'स्वां स्वाम्' इत्यादि । आत्मीयात्मीयां वृत्तिम् ॥

'परस्पराकूतहैतुकीम्' इति । परस्परस्य यदाकूतं स्ववृत्तिभोगस्तदेव हेतुः । तत्र भूतां परस्पराकूतहैतुकीं वृत्तिं चत्वारि करणानि

२ °प° इति खपुस्तके नास्ति । ३ ख. °नानि । ४ मत्पाठः ; क.ख °दुक्ति° । ५ क. °णमभि° । ६ धनुश्चिन्हाङ्कितं खपुस्तके नास्ति । ७ क. त° । ८ ख. मष्टे । ९ ख. अदृष्टोऽपि । १० क.ख. °र्व° ।

प्रतिपद्यन्ते। तत्र चक्षुर्बुद्ध्यादित्रयस्याकूतं ज्ञात्वा प्रकाशनं प्रतिपद्यते। एवं बुद्धिरहङ्कारो मनश्च त्रयाणामाकूतं ज्ञात्वाऽध्यवसायमभिमानं[1] सङ्कल्पनं च प्रतिपद्यन्ते। क्रमशश्च परस्पराकूतहैतुकीम्। किन्तु पूर्वपूर्वहैतुकी द्रष्टव्या। यथा कस्यचिदुपनिमन्त्रणं श्रुतवतः[2] श्रोत्रवृत्तिं ज्ञात्वा, बुद्धिर्गमनायाध्यवसिता। तद्वृत्तिं[3] ज्ञात्वाऽहङ्कारो मोदकानहं भक्षयिष्यामीति मन्यते। तद्वृत्तिं ज्ञात्वा मनः, प्रचुरं घृतं प्रापयिष्यामीति किं स्तोकमिति, सङ्कल्पयतीति। एवं बाह्यान्यपि करणानि स्वां स्वां वृत्तिं परस्पराकूतहैतुकीं प्रतिपद्यन्ते॥

एतानि[4] किमात्मार्थं स्वां स्वां वृत्तिं प्रतिपद्यन्ते, किमन्यार्थमित्याह- 'पुरुषार्थ एव[5] हेतुः' इति। पुरुषस्यार्थो विषयोपभोगः कैवल्यं च, स वृत्तिहेतुः॥

नन्वीश्वरः कर्ता जगतः, स एव बुद्ध्यादिकलापं सृष्टवान्[6] येन पुरुषस्यार्थः[7] सम्पाद्यते। तथा चोक्तम्—

'ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा।' इति

तत्राह—'न केनचित्कार्यते करणम्' इति[8]। प्रधानव्यतिरेकेण न कश्चिद् बुद्ध्यादिकरणं स्वां स्वां वृत्तिं कारयतीत्यर्थः। यदि कर्ता स्यात्, किमिति प्रकृतिमपेक्षते। नापि सेश्वरवादिना प्रकृतिरभ्युपगतैव[9], निश्चेतनत्वात् प्रकृतेःसचेतनोऽधिष्ठाता कर्ताऽपरो गवेष्यत इति चेत्, पुरुष एवाधिष्ठाता। अचेतना प्रकृतिः[10]। एतदुक्तमेव प्राक्॥ ३१॥



१ क. °त्वा बुद्ध्यव°। २ ख. °त। ३ मत्पाठः। क. °ध्यवसितवृत्तिं। ख °ध्यवसितद्वृत्तिं। ४ क एकानि। ५ ख. ऐतुः। ६ मत्पाठः। क. सृष्टं येन। ख. सृष्टन्येन। ७ ख. °र्थं। ८ ख. करणमति। ९ °कृ° इति खपुस्तके नास्ति। १० एतदनन्तरं खपुस्तके 'रुचे' इत्यस्ति। 'पुरुषश्चेतनः' इति पठनीयम् ?।

कतिविधमन्तः करणमित्याह—

करणं त्रयोदशविधम्, तदाहरणधारणप्रकाशकरम् ।
कार्यं च तस्य दशधा, हार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥

'करणं त्रयोदशविधम्' इत्यादि । पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, बुद्ध्यहङ्कारमनांसि च त्रीणि । एतत् त्रयोदशविधम् । करणं करोतीति । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् ॥

तत्र कस्य[१] का क्रिया यदपेक्षया करणमित्याह— 'तदाहरणधारणप्रकाशकरम्' । इति तत्[२]करणमाहरणादीनि करोतीति । तत्र कर्मेन्द्रियाण्याहरणं कुर्वन्ति, बुद्ध्यहङ्कारमनांसि धारणम्, बुद्धीन्द्रियाणि प्रकाशमिति ॥

किं तत्कार्यं यस्याहरणं कुर्वन्तीत्याह—'कार्यम्' इति । तस्य करणस्य दशविधम् कार्यम् । तत्र शब्दस्पर्शरूपरसगन्धाः पञ्च, वचनादानविहरणोत्सर्गानन्दाः पञ्चेति दशधा । पूर्वे द्विविधाः— सूक्ष्मास्[३]तन्मात्रलक्षणाः सुखैकस्वभावत्वा[४]द्दिव्याः, स्थूला आकाशादयः सुखदुःखमोहात्मकत्वा[५]ददिव्या इति । एतत्कार्यं बुद्धीन्द्रियाणां प्रकाश्यम् । वागादीनामुक्त्यादानादिकर्मकर्तृत्वात् कार्यम् ( ? ) । तत्र वाचा शब्दस्य, पाणिभ्यामादेयस्या[६]ह्रियमाणत्वादुभयमप्याहार्यम् । विहार्यं विहरणस्थानम् । पूर्वावयवन्यासेनोत्तरावयवाक्रमणेन च पादाभ्यामा[७]ह्रियमाणत्वादाहार्यम्[८] । अन्यथा कथमुत्सर्गानन्दौ[९] स्याताम् । उभयमपि कर्मेन्द्रियाविषयम्[१०] । बुद्ध्यहङ्कारमनसां धार्यम्, तैरन्तः स्ववृत्त्यावधार्यमाणत्वात् ॥ ३२ ॥



---

१ क. तस्य । 'तत्र' इति नास्ति । २ क. तत्रा° । ३ मत्पाठः । क ख. सूक्षान्त° । ४ ख. °त्वादि° । ५ मत्पाठः । क.ख. °त्वाद् दि° । ६ मत्पाठः । क. °ह्रीयमान° । ख. °स्यादुभयमाण° । ७ ख. °ह्रीय° । ८ क. °हार्याः । ९ क. °नन्देन । १० ख. °विषम् ।

तदेव त्रयोदशविधं करणं बाह्यान्तरभेदाद् द्विविधमिति दर्शयन्नाह–

अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥

'अन्तः करणम्' इत्यादि । करणं द्विविधम्— बाह्यमाभ्यन्तरं च । तत्र शरीरस्यान्तः स्थितत्वादन्तः करणं त्रिविधम्-बुद्धिरहङ्कारो मनश्चेति ॥

'दशधा बाह्यम्' इति । दश[1]प्रकारम् । पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि । तद्बुद्धिर्भवति ॥

तद् बाह्यं 'त्रयस्य विषयाख्यम्' इति । त्र्यवय[2]वस्यान्तः करणस्य बाह्यं विषय इत्याख्यायते, तद्द्वारेण विषयावगाहनात् । तेनान्तः करणस्य द्विविधो विषयः—द्वारं भोग्यं चेति । चतुष्टयस्य दृष्टेर्वर्तमाने त्रयस्यादृष्टे वृत्तिरुक्ता ॥

तत्रातीतानागतयोरपि विषययोः किं वृत्तिरस्ति, नेत्याह—'साम्प्रतकालं[3] बाह्यम्' इति । कल्यत[4] इति कालः[5], विषय एवातीतोऽनागतो वर्तमानोश्चोच्यते । न तद्व्यतिरेकेण कालोऽस्ति । मा भूत् षड्विंशतितत्त्वप्रसङ्ग इति । तत्र साम्प्रतो वर्तमानः कालो यस्य बाह्यस्य तद्धि बाह्यम् । श्रोत्रादि वर्तमानमेव शब्दादिकं प्रकाशयति, नातीतानागते । वागादि च वर्तमानमेवो[6]क्तयादानविहरणोत्सर्गानन्दान्[7] करोति, नातीतानागतान्[8] ॥

'त्रिकालमाभ्यन्तरम्' इति । त्रयः काला यस्य तत् त्रिकालम् । यथा बुद्धिर्वर्तमानमध्यवस्यति तथातीतानागतावपि । मान्धातासीत्[9] कल्की[10] राजा भविष्यतीति । यथाहङ्कारो वर्तमानमभिमन्यते तथातीता[11]नागतावपि । ममैवमासीत्, ममैवं भविष्यतीति । यथा च मनो वर्तमानं सङ्कल्पयतीति

---

१ मत्पाठः । क.ख. शब्द° । २ क. ह्य° । ३ मत्पाठः । क. °मान्तं° । ख. °मालं° । ४ क. कल्प्यत । ५ क. काले । ६ ख. °मो° । ७ ख. °त् । ८ ख. °त् । ९ ख. °न् । १० मत्पाठः । क. कत्की । ख. कत्की । ११ °तीताना° इति खपुस्तके नास्ति ।

तथातीतानागतावपि। तत्र किमिदं भूतं स्यात्, न ममेति। किमिदं भविष्यति, नेतीति[12] ॥ ३३ ॥

---

ननु च यदि स्थूलाः पृथिव्यादयस्ते विशेषाः। बाह्यं बाह्यकरणं स्वविषयं प्रतिपद्यते। पृथिव्यादयस्तर्हि भेदेन प्रतिपत्तव्या इत्याह—

बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि।
वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥३४॥

'बुद्धीन्द्रियाणि' इत्यादि। तेषामपि त्रयोदशानां[1] करणानां यानि पञ्च बुद्धीन्द्रियाणि, तानि विशेषाविशेषविषयाणि। शब्दादयः पञ्च विषया द्विविधाः—विशेषा अविशेषाश्च। तत्र ये सूक्ष्मास्[2]तन्मात्रलक्षणास्तेऽविशेषाः। ये स्थूलाः पृथिव्यादयस्ते विशेषाः। विशेषाश्चाविशेषाश्चेति द्वंद्वः। त एव विषया[3] विद्यन्ते येषामिति मत्वर्थीयः। विशिष्टानविशिष्टांश्च विषयान् गृह्णन्ती[4]त्यर्थः। तत्र श्रोत्रं स्थूलान् नानाशब्दानविकलान् गृह्णाति, शब्दतन्मात्रं च[5]। नासिका[6] स्थूलान् सुरभ्यादीन्गन्धान्, तन्मात्रं च गृह्णातीति ॥

'वाग्भवति'। केवलः शब्दो विषयो यस्याः, न विषयान्तरमित्यर्थः॥ शेषाणि पाण्यादीनि[7] चत्वारि, पञ्च विषयीणि। पञ्च विषया एषामिति। तत्र पाणिः शब्दस्पर्शरूपरसवन्तं घटादि[8]कमादत्ते। पादौ शब्दादिमत्यां भूमौ विहरतः। पायुरुपस्थश्च शब्दादिमदेव मलं शुक्रं[9] च विसृजति। अनेन द्वारेण तु सर्वं बाह्यं करणं पञ्चविषयमेव द्रष्टव्यम्। यं हि यदेवमाश्रित्य (?) स्फीतं तस्य शब्दस्पर्शरूपरसगन्धवत्त्वात्, 'बाह्यं त्रयस्य विषयाख्यम्' इत्युक्तम् ॥ ३८ ॥

---

१२ 'नेति' इति पठनीयम् ?

१ क. °नि। २ क. °त°। ३ मत्पाठः। ३. ख. विशेषा। ४ मत्पाठः। क.ख. गृह्णाती°। ५ क. तु। ६ क. अनासिका। ७ मत्पाठः। क. श्रोत्रपाण्यादीनि। ख. शेषाण्यापादीनि। ८ ख. °का°। ९ मत्पाठः। क. ख. शुक्लं।

तत्कथं तस्य विषय इत्याह—

सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात् ।
तस्मात् त्रिविधं करणं द्वारि, द्वाराणि शेषाणि ॥३५॥

'सान्तःकरणा' इत्यादि । बुद्धेरुपात्तत्वाच्छेषमहङ्कारो मनश्चान्तःकरणम् । ताभ्यां युक्ता बुद्धिः ॥

'सर्वम्' इति । त्रिष्वपि कालेषु व्यवस्थितं विषयमवगाहते गृह्णाति यस्मात्, तस्मात् त्रिविधमन्तःकरणं बुद्ध्यादि द्वारि[1] भवति । द्वाराण्यस्य सन्तीति कृत्वा । शेषाणि तु बुद्धीन्द्रियकर्मेन्द्रियाणि (?) द्वाराणि । एभिर्द्वारभूतैरन्तःकरणं विषयान् गृह्णाति ॥ ३५ ॥

ननु च यद्यन्तःकरणं बाह्यकरणद्वारेण सर्वं विषयमवगाहते, तस्मिन् किं लक्षणमित्याह—

एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥३६॥

'एते' इत्यादि । श्रोत्रादयो वागादयो बुद्ध्यादयश्चेत्येते त्रयोदश गुणविशेषाः, यत एते गुणा अन्योऽन्याभिभवद्वारेण परिणताः श्रोत्रादिव्यपदेशभाज इत्यर्थः । प्रदीपकल्पाः, स्ववृत्त्या विषयस्य प्रकाशकत्वात् । परस्परविलक्षणाः । एकस्य या वृत्तिः स्वरूपं च, न तदितरेषामपि यदि स्यादेतैनैव[1] विषयावगाहनं सिद्धं किमन्येन ॥

'कृत्स्नम्' इति । त्रैलोक्यगतं पुरुषस्यार्थं सूक्ष्मस्थूलविषयलक्षणं प्रकाश्याभि[2]व्यक्तिं नीत्वा पश्चादहङ्कारादयो द्वादश बुद्धौ प्रयच्छन्ति, स्थापयन्तीत्यर्थः । अवगाहनफलमेतत् । तस्यां च विषयोपधानोपरक्तायां बुद्धौ पुरुष उपलभते । तथे[3]दमुच्यते—बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयत इति ॥ ३६ ॥

---

१ क. द्वारी ।

१ 'स्यादेकेनैव' इति पठनीयम् ? २ क. प्राकश्यादि° । ३ ख. तवेद° ।

ननु च तुल्ये करणत्वे किमित्यहङ्कारादयो बुद्धौ प्रयच्छन्ति। प्राधान्यात्तदेव दर्शयन्नाह—

सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥३७॥

'सर्वम्' इत्यादि । उपभोगमुपभोगं प्रति प्रत्युपभोगम्। देवमनुष्यतिर्यग्योनिषु यो विषयस्योपभोगस्तं प्रति सर्वं[1] त्रैलोक्यगतविषयं पुरुषस्य साधयति, सम्पादयति । यस्माद् बुद्धिः प्रधानभूता सती नान्यः कश्चित्, तस्मात् तानि[2] करणानि बुद्धौ प्रयच्छन्ति। (यथा ग्रामे हिरण्यादिप्रत्ययं कुटुम्बिनः प्रधानाय प्रयच्छन्ति)[3]। प्रधानोऽप्यासन्नवर्त्तित्वाद् भोगपतय इति ॥

'सैव च विशिनष्टि' इति। यदा तमस्वती बुद्धिर्भवति तदा सर्वमुपनीतं सम्पादयति[4] । यदा[5] सत्त्वाधिका बुद्धिर्भवति, तदा ज्ञानसङ्गता प्रधानपुरुषान्तरं विशिनष्टि । प्रधानपुरुषयोर्विभागं करोतीत्यर्थः। अन्यत् प्रधानमन्यः पुरुष इति ॥

'सूक्ष्मम्' । सांसारिकज्ञानस्याविषयत्वात् ॥ ३७ ॥

---

यो
विशेषाविशेषविषयिणीत्युक्तम्, तत्र के विशेषाः केऽविशेषाश्चेत्यत आह—

तन्मात्राण्यविशेषाः, तेभ्यो भूतानि पञ्च पञ्चभ्यः ।
एते स्मृता विशेषाः, शान्ता घोराश्च मूढाश्च ॥३८॥

'तन्मात्राणि' इत्यादि। सूक्ष्मविषया[1]स्तन्मात्राणीत्युच्यन्ते । तैर्न कश्चिद्विशिष्यत[2] इत्यविशेषाः। यथा सूक्ष्मतृणाग्रावस्थितं तेजो न लक्ष्यते, न च किञ्चित् प्रकाशयति, तद्वत् तेऽप्यविशेषाः ॥

---

१ मत्पाठः। क. ख. सर्व° । २ क. ज्ञानि । ३ धनुश्चिन्हाङ्कितं खपुस्तके नास्ति । ४ ख. °ती । ५ 'यदा' इति खपुस्तके नास्ति ।

१ ख. °य° । २ ख. °शेष्यत ।

'तेभ्यो भूतानि पञ्च पञ्चभ्यः' इति । तन्मात्रेभ्यः पञ्च महाभूतान्युत्पद्यन्ते ॥

'एते स्मृता विशेषाः' इति । शब्दतन्मात्रादेकगुणमाकाशमुत्पद्यते । एवं स्पर्शादितन्मात्राद् द्वित्रिचतुःपञ्चगुणा वाय्वादय उत्पद्यन्ते । तैश्च तन्मात्राणि । विशिष्यन्त[1] इति विशेषाः ॥

ते च किंस्वरूपा इत्याह— 'शान्ता घोराश्च मूढाश्च' इति । शान्ताः सुखप्रदाः, घोरा दुःखप्रदाः, मूढा मोहप्रदा इति ॥ ३८ ॥

किमेतावन्त एव विशेषा उतान्ये[1]ऽपीत्याह—

सूक्ष्मा माता पितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता, मातापितृजा निवर्तन्ते ॥३९॥

'सूक्ष्माः' इत्यादि । ये सूक्ष्मास्तन्मात्रलक्षणाः[2] संसारिणः शरीरस्याश्रयतां[3] गतास्तेऽपि विशेषाः, सूक्ष्मशरीरस्यारब्धत्वात् ॥

'मातापितृजाः' इति । मातापितृजाः षट् । तत्र मातृतो लोमलोहितमांसानि, पितृतः स्नाय्वस्थिमज्जानः । तेऽपि विशेषाः, तैः स्थूलशरीरस्य षट्कोशिकस्यारब्धत्वात् । एते द्विविधा विशेषा आध्यात्मिकाः ॥

'सहप्रभूतैः' इति । यानि महाभूतानि बाह्यानि शान्तघोरमूढा[4]न्युक्तानि, तानि स्थूलशरीरस्या[5]वकाशव्यूहनप[6]क्तिक्लेदनधारणकर्तृ[7]त्वेन प्रकृष्ट[8]भूतान्युच्यन्ते । तैः सह त्रयो विशेषाः ॥

'सूक्ष्मास्तेषां नि[9]यता मातापितृजा निवर्तन्ते' इति । सूक्ष्मशरीरं नियतं ज्ञानप्राप्तेः प्राक्, तस्य सांसारिकत्वात् । स्थूलशरीरं[10] नियतं तु निवर्तते, तस्य प्रतिमरणं पतितस्य रसभस्मनिष्ठान्तत्वात् ॥ ३९ ॥

---

३ ख. °शेष्यन्त ।

१ ख. °न्त्ये° । २. ख °क्षणा सां° । ३ क. °यतं । ४ क. °दृढा° । ५ ख. °रस्य° । ६ क. °पत्नी° । ७ ख. °कर्तृ° । ८ क. प्रविष्ट° । ९ मत्पाठः । क. ख. नीय° । १० क. स्थूलशरीरं ।

यदेतत् सूक्ष्मशरीरं तत्कथमुत्पन्नमित्याह—

पूर्वोत्पन्नमसक्तं नियतम्महदादिसूक्ष्मपर्यन्तम् ।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥

'पूर्वोत्पन्नम्' इत्यादि । प्रधानेनादिसर्गे प्रतिपुरुषमुत्पादितत्वात् पूर्वोत्पन्नम् । असक्तमप्याह । तन्न क्वचिद् विहन्यते, पर्वतमपि भित्त्वा[१] गच्छति ॥

'नियतम्' । नित्यम् , ज्ञानोत्पत्तेः प्रागित्यर्थः ॥

किंपरिमाणमिदमित्याह— 'महदादिसूक्ष्मपर्यन्तम्' इति । बुद्धिरादिर्यस्य[२] तत् , महदादिसूक्ष्मविषयास्तन्मात्रलक्षणाः पर्यन्तं यस्य तत् सूक्ष्मपर्यन्तम् । बुद्धिरहङ्कार एकादशेन्द्रियाणि पञ्च तन्मात्राणीत्येतत्परिमाणमित्यर्थः ॥

'संसरति' । त्रिषु लोकेषु ॥

'निरुपभोगम्' इति । बाह्येन स्थूलशरीरेण विकलत्वाद् विषयभोगसमर्थं न[३] भवतीत्यर्थः ॥

'भावैरधिवासितम्' इति । धर्मादिभिरुपरक्तमित्यर्थः ॥

'लिङ्गम्' इति । प्रलयकाले लयं गच्छतीति कृत्वा ॥ ४० ॥

ननु करणमात्रमेव[१] संसरति, किं सूक्ष्मशरीरेणेत्याह—

चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथा च्छाया ।
तद्वद्विनाऽविशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥

'चित्रम्' इत्यादि । यथा कुड्यादिकमाश्रयमृते चित्रं न तिष्ठति ॥

'स्थाण्वादिभ्यः' इति । आदिशब्देन वृक्षस्तम्भादयः[२] । 'पृथग्विनानानाभिस्तृतीयान्यतरस्याम्' इति पञ्चम्यपि भवति । तैर्विना[३] यथा च्छाया

१ क. भूत्वा । २ ख. °स्यं । ३ 'न' इति कपुस्तके नास्ति ।
१ ख. कार° २ क. °स्तम्भा° । ३ क. °याः ।

स्निग्धा परुषा वा न तिष्ठति ॥

'तद्वद्विनाऽविशेषैर्न तिष्ठति निराश्रयं लिङ्गम्' इति । अविशेषा-स्तन्मात्राणि । लिङ्गं त्रयोदशविधं करणमिह[४] गृह्यते । न तिष्ठति निराश्रयत्वात् । ( तैर्हि सूक्ष्मशरीरमारब्धम्, तदभावा[४]त्तदपि नास्तीति निराश्रयत्वात् )[५] । न संसरति । न च निराधारेण[६] करणेन पुरुषस्य संयोगः सम्भवति । पुरुषोऽपि निष्क्रियत्वान्न संसरति ॥ ४१ ॥

तदेव सूक्ष्मशरीरं किमर्थं संसरतीत्याह—

पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥

'पुरुषार्थहेतुकम्' इत्यादि । पुरुषार्थो द्विविध उक्तः । स हेतुर्[१]यस्येति । समासान्तः कप् ॥

'इदम्' इति । महदादि सूक्ष्मपर्यन्तं लिङ्गमुक्तम्, तन्नटवद्‌वतिष्ठते। यथैक एव नटस्तं तं विशेषमास्थाय[२] यवनिकातो निर्गत्य राजामात्यविदूषकादिभावेनानुविद्धो[३]ऽवतिष्ठते, तथा लिङ्गमपि तं तं देहमास्थाय[४] देवमनुष्यतिर्यग्भावेन व्यवतिष्ठते ॥

तदेव कथं[५] भवतीत्याह—'निमित्तनैमिकप्रसङ्गेन' इति । निमित्तं धर्माधर्मादि, नैमित्तिकमूर्ध्वाधोगमनादि । वक्ष्यति च । तयोः प्रसङ्गेनेति ॥

किमेतत्सर्वमीश्वरात् किं वा स्वभावादित्यत्राह[६]— 'प्रकृतेः विभुत्वयोगात्' इति । प्रकृतिः प्रधानम्, तस्या विभुत्वं जगत्कर्तृत्वम्। तद्योगात् नटवद्व्यवतिष्ठते । प्रधानेनैव हि पुरुषस्यार्थः कर्तव्य इति

---

४. मत्पाठः । ख. तदाभा° । ५ धनुश्चिन्हाङ्कितं कपुस्तके नास्ति । ६ ख. °धानेन ।

१ ख. °तुय° । २ ख. °त्थाय । ३ ख. °द्धोभवति° । ४ ख. °त्थाय ।

५ क. तथा । ६ क. °दित्याह ।

महदादिसूक्ष्मपर्यन्तं लिङ्गमुत्पाद्य धर्मादिभिरधिवासयति। तदधिवासितं च नटवत् व्यवतिष्ठते। नेश्वरान्न स्वभावादिति भावैरधिवासितमित्युक्तम् ॥ ४२ ॥

ते पुनः[१] कियन्तः किमाश्रिता इत्याह—

सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः।
दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥

'सांसिद्धिकाश्च' इत्यादि। ये प्राकृतस्वभावास्ते सांसिद्धिका उच्यन्ते। ते च कपिलस्यैव महामुनेर्नान्यस्य। तस्य ह्युत्पद्यमानस्यैवादिसर्गे सहोत्पन्ना धर्मज्ञानवैराग्यैश्व[२]र्यसंज्ञकाश्चत्वारो भावाः। ये त्वादिसर्गादुत्तरकालमुत्पन्नकार्यकारणानामस्मद्विधानां प्रयत्नपूर्वका उत्पद्यन्ते, ते वैकृताः ॥

ते च द्विविधाः। यदाह — 'धर्माद्या दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः' इति। धर्मादयश्चत्वारः, विपरीताश्चाधर्मादयश्चत्वार इत्यष्टौ। एते त्रयोदशविधं करणमाश्रित्य प्रवर्तन्ते। कार्यं पञ्च(?), कुक्षिस्थस्यास्य निच्छुरित[३]स्य[४] तु कौमारयौवनवार्द्धकानि त्रयः, इत्यष्टौ भावाः। तत्र वैकृतै[५]र्धर्मादिभिरधिवासि[६]तं संसरतीति ज्ञेयम् ॥ ४३ ॥

निमित्तनैमित्तिकप्रसङ्गेनेत्युक्तम्। तदुभयमपि दर्शयितुमाह—

धर्मेण गमनमूर्ध्वं, गमनमधस्ताद्भवत्यधर्मेण।
ज्ञानेन चापवर्गो, विपर्ययादिष्यते बन्धः ॥ ४४ ॥

'धर्मेण' इत्यादि। धर्मादिनिमित्तमूर्ध्वगमनादि नैमित्तिकम्। तत्र

---

७ क. स्व।

१ एतदनन्तरं कखपुस्तकयोः ते इति अस्ति। २ ख. ०र्यसं० ३ क. नि…रितस्य ४. 'तु' इति कपुस्तके नास्ति। ५ ख. ०दुर्मा० ६ ख. ०त्वासि०

१ ख. ०मूर्ध्वा०

धर्मेण यमनियमलक्षणेन गमनमूर्ध्वमिति, सूक्ष्मशरीरस्य देवादिष्ववस्थितिरित्यर्थः ॥

'गमनमधस्ताद्भवत्यधर्मेण' इति । तिर्यग्योनिषु स्थितिः । मिश्रान्मनुष्यलोके स्थितिरित्यर्थोक्तम् ॥

'ज्ञानेन चापवर्गः' इति । प्रधानपुरुषान्तरज्ञानाख्येन[2] ज्ञानेन लिङ्गं निवर्तते । ततः केवलः पुरुषो भवति ॥

'विपर्ययादिष्यते[3] बन्धः' इति । ज्ञानविपर्ययादज्ञानात् संसारचक्रबंधः, पुनः पुनरावर्तनम् । स च त्रिप्रकारः—प्रकृतिबंधः, दक्षिणाबंधः, विकारबंधश्चेति । येषां प्रकृतिरेव परतत्त्वं नान्यत्, तेषां प्रकृतिवादिनां प्राकृतिको[4] बंधः । येषामिष्टापूर्तभाविन[5] एव दिव्यादिव्यमानुषभोगाः पुरुषार्थ इति, तेषां कर्मवादिनां दक्षिणाबंधः । इष्टापूर्ते दक्षिणेति । तथा चोक्तम्—

*अग्निहोत्रं तपः सत्यं देवानां परिपालनम्[6] ।*
*अतिथिर्वैश्वदेवं च इष्टमित्यभिधीयते ॥*
*पुष्करिण्यः सभा वाप्यो देवतायतनानि च ।*
*अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥*

येषां[7] विकार एवैश्वर्यलक्षणः पुरुषार्थ इति, तेषां विकारत्ववादिनां वैकारिको बंधः ॥ ४४ ॥



**वैराग्यात् प्रकृतिलयः, संसारो भवति राजसाद्रागात् ।**
**ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥ ४५ ॥**

'वैराग्यात्' इत्यादि । यो विषयादिदर्शनाद्विरक्तो यमनियमपरिस्थितो न ज्ञानं पर्येषते, तस्य मृतस्य वैराग्यादष्टासु प्रकृतिषु प्रधानादित-

२ क °पुरुषज्ञानाख्येन । ३ क °दिषुते । ४ मत्पाठः । क. ख प्रकृतिको । ५ ख. °मिष्टापूर्तकर्तभाविन । ६ ख. °पालिनम् । ७ मत्पाठः । क. ख. एषां ।

न्मात्रपर्यन्तासु लयः[1], स्थूलशरीरेण विषयोपभोगनिमित्तेन योगः। तल्लीनश्चात्मानं मुक्तमिव मन्यते न तु मुक्तम्, सर्गकाले पुनः संसरणात्। यदा तु ज्ञानं पर्येष्यते[2] तदा मुच्यत एव। तथा चोक्तम् —

*ज्ञानादथ विरागाच्च तथा कृत्स्नस्य संक्षयात्।*
*इत्येवं जायते मोक्षो मुक्त आत्मस्थ उच्यते॥ इति।*

'संसारो भवति राजसाद्रागात्' इति[3]। वैराग्यविषयोऽशुभविषयाभिष्वङ्गो राजसो रागः, तस्य शुभाशुभकर्माक्षेपकत्वात्। तस्माद्देवादिष्वयं जनाद्यजिभावेन (?) संसरति॥

'ऐश्वर्यादविघातः' इति। अनैश्वर्यात्तद्विपर्यास इति। अविघातविपर्यासो विघातः, प्रार्थितानामप्राप्तिरित्यर्थः। मुक्तिस्तु दूरोत्सारितैव॥ ४५॥

---

एषामष्टानां बुद्धिरूपाणामेकेन मोक्षः सप्तभिर्बन्धः संसार इति यदेतन्निमित्तनैमित्तिकं षोडश[1]मुक्तं तत्संक्षेपेण चतुर्विधमाह —

**एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः।**
**गुणवैषम्यविमर्देन तस्य भेदास्तु पञ्चाशत्॥४६॥**

'एषः' इत्यादि। प्रत्ययशब्देन बुद्धिरुच्यते। तस्य सर्गो यः षोडशविध उक्तः, एष विपर्ययाशक्तितुष्टिसिद्ध्याख्यः[2]। विपर्ययादीनामाख्या यस्य प्रत्ययसर्गस्य स तथोक्तः। तत्र विपर्ययमज्ञानम्, अशक्तिर्ज्ञानाधिगमासामर्थ्यं सत्यामप्यधिजिगांसायाम्[3], तुष्टिर्मोक्षोपायेषु वैमुख्यम्, सिद्धिर्ज्ञानप्राप्तिः॥

---

१ एतदनन्तरं कपुस्तके 'न' इति अस्ति। २ एतदनन्तरं कपुस्तके 'तु' इति अस्ति। ३ मत्पाठः। क. राजसान्द्रागतिः। खः राजसाद्रागादितिः।

१ क. ख. त्वषोडश°। २ क. °न्निध्या°। ३ °जिघांसायाम्।

तस्य चतुर्विधस्य पुनः पञ्चाशत् भेदा भवन्ति। केन[४] प्रकारेणेत्याह—'गुणवैषम्यविमर्देन' इत्यादि। सत्त्वरजस्तमसामन्योऽन्याभिभवद्वारेण वैषम्यं विषमभावः, एकस्य द्वयोर्वाधिक्येऽन्यस्यानाधिक्यम्। एकद्वित्रियोगेन षड्विधं वैषम्यम्। तेन द्वयोर्विमर्दः परस्परक्षोभः। तेन हेतुना भवतीत्यर्थः ॥ ४६ ॥

तान् भेदान् दर्शयन्नाह—

पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात्।
अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥

'पञ्च विपर्ययभेदाः' इत्यादि। अज्ञानाख्यस्य सर्गस्य भेदाः पञ्च—तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्रश्चेति। एत एव सांख्यप्रवचने[१] क्लेशा उच्यन्ते। 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः' इति। तत्राविद्याक्षेत्रमुत्तरेषाम् ॥

'अशक्तिश्च' इति। अशक्त्याख्यः सर्गः ॥

'करणवैकल्यात्' इति। करणं बाह्यमाभ्यन्तरं च। तयोर्वैकल्यादष्टाविंशति भेदा यस्याः अशक्तेः सा भवतीति विभक्तिपरिणामेन योज्यम्। करणवैकल्यं च गुणवैषम्यविमर्देन भवति ॥

'तुष्टिर्नवधाऽष्टधा[२] सिद्धिः'। इति तुष्टिसर्गो नवप्रकारः, सिद्धिसर्गोऽष्टप्रकारो भवतीत्यर्थः। एतैः समुदायेन पञ्चाशद्भेदा इति ॥४७॥

तानवान्तर[१]भेदसहितान् दर्शयन्नाह—

भेदस्तमसोऽष्टविधो मोहस्य च, दशविधो महामोहः।
तामिस्रोऽष्टादशधा, तथा भवत्यन्धतामिस्रः ॥४८॥

४ मत्पाठः। क. ख. तेन।

१ क. °प्रतिवचने। २ अष्टधा इति खपुस्तके नास्ति।

१ ख. तानावा°।

'भेदस्तमसः' इत्यादि । तम इत्यविद्योच्यते । सा चोत्तरेषां प्रसवभूमिः । सा च प्रकृतिः । तत्त्ववेदिनां सत्यपि वैराग्ये नापवर्ग इति, ज्ञानस्याभावात् । ततश्च तेषामष्टास्वेव प्रकृतिषु लयो भवतीति अष्टविधा अविद्या[2], विषयस्याष्टविधत्वात्[3] ॥

मोहस्य चेतिशब्देना[4]ष्टविधो भेद[5] इत्यनुवर्तते । मोह इत्यस्मितोच्यते । देवा अपि विनाशिनोऽपि, अष्टगुणमैश्वर्यमाश्रिता आत्मानमविनाशिनं मन्यन्ते । ततश्च तेषामष्टविधो मोहः, ऐश्वर्यस्याष्टविधत्वात् ॥

'दशविधो महामोहः' इति सुखानुशयो रागो[6] महामोह इत्युच्यते । स च दिव्यादिव्यविषयेषु वर्तमानो दशविधो भवति । तत्र सूक्ष्मास्तन्मात्रलक्षणाः पञ्च, सुखैकस्वभावत्वाद् दिव्याः । स्थूलाः पृथिव्यादयः पञ्च, सुखदुःखमोहात्मकत्वाददिव्याः ॥

'तामिस्रोऽष्टादशधा' इति । दुःखानुशयो द्वेषस्तामिस्र इत्युच्यते । स चाष्टगुणैश्वर्ये दशविधे च विषये प्रतिभवतीत्यष्टादशविधः ॥

'तथा भवत्यन्धतामिस्रः' इति । यथा तामिस्रोऽष्टादशधा तथाऽयमपीत्यर्थः । मरणत्रासोऽन्धतामिस्र उच्यते । स चाष्टगुणैश्वर्ये दशविधे च विषये प्रतिभवतीत्यष्टादशविधः ॥

' तथा भवत्यन्धतामिस्रः ' इति । यथा तामिस्रोऽष्टादशधा तथाऽयमपीत्यर्थः । मरणत्रासोऽन्धतामिस्र उच्यते । स चाष्टगुणैश्वर्ये दशविधे विषय एव भवतीति । एवं द्विषष्टिभेदमज्ञानमुक्तम् ॥४८॥

अशक्तिः करणवैकल्यादित्युक्तम्, तस्या[1] भेदान् दर्शयितुमाह—

एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुपदिष्टा ।
सप्तदशधा च बुद्धेर्विपर्ययास्तुष्टिसिद्धीनाम् ॥४९॥

---

२ मत्पाठः क.ख. अ.प विद्या । ३ मत्पाठः । क.ख. विषयस्याष्टविभवत्वात् ।
४ क. सब्दो° ५ मत्पाठः । क. ख. भेदा° । ६ मत्पाठः । क. ख. रागे ।

१ मत्पाठः । क. ख. तस्य ।

'एकादश' इत्यादि । एकादशानामिन्द्रियाणामेकादशैवोपघाताः । श्रोत्रचक्षुर्घ्राणानां वाधिर्यान्ध्यत्वाघ्रातृत्वानि[२], वाचो मूकत्वम्[३], जिह्वाया जाड्यम्, मनस उन्मादः, पाणिपादोपस्थानां कौण्यपङ्गुत्वक्लैब्यानि, त्वगिन्द्रियस्य कुष्ठः, पायोरुदावर्त इति ।

*[४]बाधिर्यमान्ध्याघ्रातृत्वे मूकता जडता तथा ।*
*उन्मादकौण्यकुष्ठानि[५] क्लैब्योदावर्तपङ्गुताः ॥ इति ॥*

एत इन्द्रियवधा[६] अशक्तिरित्युपदिष्टाः[७] सांख्याचार्यैः ॥

'सह बुद्धिवधैः'[८] इति । बुद्धेरपि वधा[९] अशक्तिरुपदिष्टा ॥ ते कियन्त इत्याह—'सप्तदशधा च बुद्धेर्विपर्ययात्तुष्टि[१०]सिद्धीनाम्' इति । तुष्टयो नव, सिद्धयश्चाष्टौ । वक्ष्यमाणाम्भसां ये विपर्ययास्ते सप्तदशविधा बुद्धेर्ज्ञेयाः[११] । एवमशक्तिरष्टाविंशतिभेदा यया कर्मस्वशक्तो[१२] भवति ॥

ननु प्रत्ययसर्ग[१३] इत्युक्तम्, नायमिन्द्रियवधः[१४] प्रत्ययसर्गः किन्त्वहङ्कारसर्ग इति सत्यम्, अहङ्कारस्य प्रत्ययसर्गत्वात् तत्सर्गोऽपि प्रत्ययसर्ग उच्यते । धर्मो वा प्रत्ययः सर्गः ॥ ४९ ॥

---

तुष्टि[१]भेदानाह—

**आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।**
**बाह्या विषयोपरमात् पञ्च, नव तुष्टयोऽभिमताः ॥५०॥**

'आध्यात्मिकाः' इत्यादिना । प्रकृत्यादीन्याख्या यासां तुष्टीनां

---

२ क. बाधिर्यन्धित्वा···त्वानि । ३ मत्पाठः । क. वाचा मुक्तत्वम् । ख. वाचा मूकत्वम् । ४ मत्पाठः । क. ख. °मान्ध्य° । ५ क. °कुण्डानि । ६ क. °पथा । ७ ख. अशक्तिरुपदिष्टाः । ८ क. °पथैः । ९ क. पथा । १० मत्पाठः । क. ख. °ऽतुष्टिः । ११. एतदनन्तरं कखपुस्तयोः 'ये' इत्यप्यस्ति । १२ मत्पाठः । क. °र्मशक्तो । ख. °र्मस्वशक्तो । १३ ख. प्रत्ययः । १४ क. °पथः ।

१ मत्पाठः । क. इष्ट° । ख. तुष्ट° ।

तास्तथोक्ताः। तत्र प्रकृतिः प्रधानम्। सैव व्यक्तात्मना परिणम्य बन्धमोक्षौ कुरुत[२] इत्येतावन्मात्रोपदेशात् तुष्टो भवति यस्तस्य प्रकृत्याख्या तुष्टि-रम्भ इत्युच्यते ॥

उपादीयते प्राप्यते मोक्षोऽनेनेत्युपादानम्। प्रव्रज्यालिङ्गं चात्र दण्डादि। न प्रकृतिज्ञानमात्रेण मुक्तिः! 'उपादानेन चापरे'[३] इत्यस्माद्द्वि-तीयादुपदेशादिहैव मुक्तिः प्राप्तव्येति परितुष्टः प्रव्रजितोऽयं तस्य द्वितीया उपादानाख्या तुष्टिः[४] सलिलमुच्यते ॥

कल्यत[५] इति कालः। महदादिसूक्ष्मपर्यन्तेन लिङ्गेन संसरताऽपरेण मोक्षो न प्रकृत्युपादानमात्रादिहैव जन्मनीति तस्मात्तृतीयादुपदेशात्[६] तुष्टो यः कालापेक्षी स्थितस्तस्य तृतीया कालाख्या तुष्टिरोघ इत्युच्यते ॥

यस्यापरं भाग्यमस्ति तस्य मोक्षः, प्रकृत्युपादानकालमात्रेण न, कश्चिद्विपरीतभाग्योऽस्तीति तस्माच्चतुर्थादुपदेशात् तुष्टो यो भाग्यापेक्षी स्थितस्तस्य चतुर्थी तुष्टिरित्युच्यते[७]। एताश्चतस्र आत्मानमधिकृत्य भवन्तीत्याध्यात्मिकाः, आत्मना मोक्तव्यमिति कृत्वा ॥

'बाह्यविषयोपरमाच्च'[८] इति। शब्दादिभ्यो व्यावृत्तिरुपरमणं पञ्चधा भवति। आर्जनरक्षणक्षय[९]सङ्गहिंसादोषदर्शनात्। तत्र विषयार्जने[१०] महद् दुःखं तदल्पविषयेभ्य इत्यार्जनदोषदर्शनान्निवृत्तस्य तुष्टिरियं पञ्चमी सुतारमित्युच्यते ॥

विषया आर्जितुं शक्याः, रक्षणं तु दुःखं बहुभिः तज्जन्यमानानां (?) स्यादिति रक्षणदर्शनान्निवृत्तस्य तुष्टिरियं षष्ठी सुपारमित्युच्यते ॥

---

२ मत्पाठः। क. ख. कुरु। ३ ख. चेत्यपरे। क. चापरेत्यस्मात्। ४ मत्पाठः। क. कृष्टः। ख. तुष्ट॰। ५ क वध्यत। ६ क. ॰दुःखदेशात्। ७ मत्पाठः। क. ख. तुष्टि॰ ८ 'बाह्यविषयोपरमात् पञ्च' इति पठनीयम्?। ख. बाह्याविषयो॰। ९ मत्पाठः। क. ख. ॰रक्षणे। १० मत्पाठः। क. व्यञ्जने। ख. व्यजने।

विषया आर्जितुं रक्षितुं क्षये च प्रतिविधातुं शक्याः, किन्तूपभुज्यमाना महतीमात्मसक्तिं कुर्वन्ति, तदप्राप्तौ च महद् दुःखमिति सङ्गदोषदर्शनादुपरतस्याष्टमी तुष्टिरनुत्तमाम्भ इत्युच्यते ॥

सर्वं शक्यं किन्त्वनुपहत्य भूतानि न भोगः सम्भवति। भूतोपघातान्महदनिष्टफलमिति हिंसादोषदर्शनादुपरतस्य तुष्टिरियं नवमी उत्तमाम्भ इत्युच्यते। एताः पञ्च विषयद्वारेणेति भवन्तीति बाह्याः। तत्पूर्विकाश्चाध्यात्मिकाः, विषये तत्परस्याध्यात्मिकतुष्ट्यसम्भवात् ॥

तत्र प्रकृत्युपादानकाला न मोक्षोपाया इत्युपदिष्टमपि यो वैमुख्यान्न प्रतिपद्यते तस्याध्यात्मिकाश्चतस्रः, विषयोपरमाच्च बाह्याः पञ्चेति नव तुष्टयः। ता बुद्धिवधा[11] इत्युच्यन्ते। तेषां शक्तेरन्तर्भवोऽस्ति [?]। तासां चतुष्षष्टीनां महत्प्रभृतयो विपर्ययेण संज्ञाः। तदुभयमपि बुद्धावन्तर्भूतं तत्सर्गत्वात् ॥ ५० ॥

---

कतिभेदा ज्ञानाज्ञान[1]लक्षणा सिद्धिरित्याह—

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।
दानं च सिद्धयोऽष्टौ, सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥

'ऊहः शब्दोऽध्ययनम्' इत्यादि। सिद्धिर्ज्ञान[2]प्राप्तिः, तस्या भेदा उपायभेदात्। ऊह इति। जन्मान्तरसंस्कृतधियो यस्य बन्धमोक्षकारणमुत्प्रेक्षमाणस्य प्रधान[3]पुरुषान्तरज्ञानमुत्पद्यते तस्य सिद्धिरूहहेतुका[4] प्रथमा[5] तार[6]मित्युच्यते ॥

यस्य सांख्यशास्त्रपाठ[7]मन्यदीयमाकर्ण्य तत्त्वज्ञानमुत्पद्यते, सा सिद्धिः शब्दहेतुका द्वितीया सुतारमित्युच्यते ॥

---

११ मत्पाठः। क. ख. °पदा।

१ क. ख. ज्ञानज्ञान २ क. ख. °ज्ञान°। ३ मत्पाठः। क. ख. प्रधानं।
४ मत्पाठः क. ख. °हेतुकः। ५ मत्पाठः क. ख. प्रथका। ६ क. कार° ७ मत्पाठः।

यस्य शिष्याचार्यसम्बन्धेन सांख्यशास्त्रं शब्दतो[८]ऽर्थतश्चाधीत्य ज्ञानमुत्पद्यते, तस्याध्ययनहेतुका। अध्ययनेन हि तत्परिज्ञानात्। एषा तृतीया तारवि [ ? ] इत्युच्यते ॥

'दुःखविघातकास्त्रयः' इति। योऽप्याध्यात्मिकेनाधिभौतिकेनाधिदैविकेन वा भावितस्तद्विघातार्थी ज्ञानं पर्येष्यति, ऊहेन शब्देनाध्ययनेन वा, तस्य तद्विघातहेतुका[९]: प्रमोदप्रमुदितमोदनाख्यास्तस्रः, उपायस्य त्रित्वादिति। पूर्वा यास्तिस्रः सिद्धयस्ता न दुःखहेतुका इति बोद्धव्याः ॥

'सुहृत्प्राप्तिः' इति। योऽधिगततत्त्वः सुहृदं प्राप्य ज्ञानमधिगच्छति, तस्य सुहृत्प्राप्तिपूर्विका। मित्रं हि स्नेहात् ज्ञानं प्रकाशयति। इयं सप्तमी रम्यकमित्युच्यते ॥

दानं च सिद्धिहेतुः। दानेन ह्याराधितो ज्ञानी ज्ञानं प्रयच्छति। इयमष्टमी सदाप्रमुदितमित्युच्यते ॥

तद्विपरीता असिद्धयः। मन्दबुद्धित्वान्नोहते यस्तस्यानूहहेतुका असिद्धिः। यः शक्तोऽपि सांख्यशास्त्रं शृण्वन्नपि बुद्धिदौर्बल्यान्न बुद्ध्यति तस्य शब्दहेतुका असिद्धिः। बुद्धिदोष एवायम्। यस्य गुरुपूर्वकं नाध्ययनं बुद्धिदोषादेव तस्यानध्ययन[१०]हेतुका असिद्धिः। न यत्र मित्रसंग्रहो न च दानमित्यष्टावसिद्धयो बुद्धिवधा[११] अशक्तावन्तर्भूताः। तासां चासिद्धीनां मोषमुष्णामानोरमित्याद्याः[१२] [ ? ] संज्ञाः। तदुभयं बुद्धावन्तर्भूतं तत्सर्गत्वात् ॥

'सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः' इति। तस्या अष्टविधायाः[१३] सिद्धेर्यः पूर्वो विपर्ययाशक्तितुष्ट्याख्यस्त्रिविध उक्तः सोऽङ्कुश इवेत्यङ्कुश उक्तः। तेन ह्यस्वतन्त्रीकृतो लोकः संसारचक्रेऽवतिष्ठते। तत्र विपर्ययादिष्यते

---

क. °पर° । ख. °५|र° । ८ ख. गन्धतो° । ९ मत्पाठः । क. ख. °हेतुका । १० मत्पाठः । क. तस्य नध्यान° । ख. तस्य नध्यन° । ११ क पथा । १२ ख. मोषमुनामनोरमित्याज्ञाः । १३ मत्पाठः । क. ख. यस्याः ।

बन्ध इति वचनात् पञ्चविधमज्ञानमङ्कुशः। अशक्तिः[१४] करणवैकल्यम्, ततो[१५]हि ज्ञाना[१६]प्राप्तिरित्यङ्कुशः। तुष्टिरप्यङ्कुशः। तदा[१७] प्रकृत्युपादानकाल-भाग्या[१८] मोक्षोपाया[१९] इति, विपर्ययोपरमाच्च[२०] मुक्त इत्येतावन्मात्रादुपदेशात्[२१] तुष्टो न ज्ञानं पर्येष्यति। यदा तु पर्येष्यति तदाऽनङ्कुश इत्यर्थः। एते प्रत्ययसर्गभेदाः पञ्चाशत् पदार्थाः, अस्तित्वादयश्च दश। ते चास्यामेव[२२] सप्तत्यां निर्दिष्टाः। तथा चाह संग्रहकारः—

*अस्तित्वमेकत्वमथार्थवत्त्वं पारार्थ्यमन्यत्वमकर्तृभावः।*

*योगो वियोगो बहवः पुमांसः स्थितिः शरीरस्य च शेषवृत्तिः ॥इति॥*

एकत्वमर्थवत्त्वं पारार्थ्यं चेति प्रधानमधिकृत्योक्तम्। अन्यत्वमकर्तृत्वं बहुत्वं चेति पुरुषमधिकृत्य। अस्तित्वं योगो वियोगश्चेत्युभयमधिकृत्य। स्थितिर्मूल[२३]सूक्ष्ममधिकृत्य। वक्ष्यति—'तिष्ठति संस्कारवशात्' इति। एते षष्टि पदार्थाः, तदर्थं शास्त्रं षष्टितन्त्रमित्युच्यते ॥ ५१ ॥



पूर्वोत्पन्नं लिङ्गं भावैरधिवासितं संसरतीत्युक्तम्, तत्र किं भावा अपि पूर्वमुत्पन्नाः किं लिङ्गमेवेत्यत्राह—

**न विना भावैर्लिङ्गम्, न विना लिङ्गेन भावनिष्पत्तिः।**
**लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ॥५२॥**

'न विना' इत्यादि। यदि भावा न पूर्वोत्पन्नास्तैर्विना लिङ्गमपि नास्ति। संसरणार्थं लिङ्गं संसार[१]निमित्तं च भावाः ॥

'न विना लिङ्गेन भावनिष्पत्तिः' इति। लिङ्गं विना न भावनिष्पत्तिः

---

१४ मत्पाठः। क. ख. अक्तिः। १५ क. तानि १६ मत्पाठः। क. ख. ज्ञान°। १७ मत्पाठः। क. ख. यदा। १८ मत्पाठः। क. ख. भोग्या। १९ मत्पाठः। क. ख. °पाय। २० ख. °पशमाच्च। २१ क. °दुपभोगात्। २२ मत्पाठः। क. ख. तेशा अस्यामेव। २३ मत्पाठः। °मूल°।

१ मत्पाठः। क. ख. चाद्याः।

लिङ्गाश्रितत्वाद्भावानाम् । यस्मादेवं तस्मात् लिङ्गाख्यो भावाख्यश्च द्विप्रकारः प्रधानत्वात् सर्गो भवतीति । सृज्यत इति सर्गः ॥५२॥



यथा[1] द्वावेतौ पूर्वोत्पन्नौ तथा भूतसर्गोऽपीति दर्शयन्नाह—

अष्टविकल्पो दैवस्तैर्यग्योन्यश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः, समासतो भौतिकः सर्गः ॥५३॥

'अष्टविकल्पः' इत्यादि । देवानामयं दैवः । सोऽष्टविधः । तद्यथा ब्राह्मः, प्राजापत्यः, सौरः, आसुरः, गान्धर्वः, याक्षः, राक्षसः, पैशाचश्चेति ॥

'तैर्यग्योन्यश्च पञ्चधा भवति' इति । तिर्यग्योनीनामयं तैर्यग्योन्यः । पशुमृगपक्षिसरीसृपस्थावरभेदात् पञ्चविधः । तत्र गवाद्या रासभान्ताः पशवः । सिंहाद्या विडालान्ता मृगाः । हंसाद्या मशकान्ताः पक्षिणः । सर्पादयः कृम्यन्ताः सरीसृपाः । वृक्षादयः स्थूणान्ताः स्थावरा इति ॥

'मानुष्यश्चैकविधः' इति । मनुष्याणामयं मानुष्यः । एवंविधसंस्थानस्यैकविधत्वात् । ब्राह्मादिभेदो[2]ऽपि सत्त्वरजस्तमसां विकल्पात् काल[3]व्यवहारनिमित्तम् ॥

'समासतः' इति । संक्षेपेण । विस्तरं...तस्तस्यैव (?)[4]— जरायुजाण्डजोष्मजोद्भिज्जाख्याश्चत्वारो भेदाः शास्त्रान्तरे द्रष्टव्याः । उद्भिज्जाः स्थावराः ॥

---

१ मत्पाठः । ख. थो । २ क. ब्रह्मादि° । 'ब्राह्मणादि' इति पठनीयम् ? ३ क. कोप° । ४ ख. विस्तारं... । 'विस्तरश्च तस्यैव' इति पठनीयम् ?

'भौतिकः सर्गः' इति । भूतेषु भवो भौतिकः; लोकोत्पाद[5] इत्यर्थः । स च द्विविधः ॥५३॥

स्थूलशरीरे सत्त्वयि[1] कश्चिदेव क्वचिदाधिक्येन वर्तत इति दर्शयन्नाह—

ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो, ब्रह्मादिस्तम्बपर्यन्तः ॥५४॥

'ऊर्ध्वम्' इत्यादि । ब्रह्मा आदिर्यस्य सर्गस्य[2] स्तम्बश्च तृणविटपपर्यन्तः, स ब्रह्मादिस्तम्बपर्यन्तः सर्गः । स ऊर्ध्वः सत्त्वविशालः । ऊर्ध्वं देवलोकस्तस्योत्कृष्टत्वात् तत्र सात्त्विक इत्यर्थः । देवलोकस्य सत्त्वबहुलत्वात् ॥

[3]'तमोविशालश्च मूलतः सर्गः' इति । तैर्यग्योनौ[4] मूलम्, तस्याधमत्वात् । तस्मिन् मूले तमोऽधिकं तमोबहुलत्वात् ॥

'मध्ये रजोविशालः' इति । मनुष्यलोके मध्ये । उत्तराधरभावात् तत्र दुःखबहुलत्वात् ॥५४॥

यदि त्रिषु लोकेषु लिङ्गं संसरति, तदेव तर्हि सांसारिकं सुखं दुःखं वाप्नोति, तस्यैव सांसारिकत्वादित्याह—

तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।
लिङ्गस्याविनिवृत्तेस्तस्माद् दुःखं स्वभावेन ॥५५॥

'तत्र' इत्यादि । तेषु लोकेषु जरामरणकृतमिति चतुर्दुःखो-

---

५ क. लोकोत्पादक ।

१ 'सत्यपि' इति पठनीयम् ? २ खपुस्तके नास्ति । ३ इतः प्राक् 'रजोविशाल इति' इत्यधिकं कखपुस्तकयोर्विद्यते । ४ मत्पाठः । क. तैर्य... । ख. तैर्यग्यो... ।

पलक्षणार्थम्। गर्भदुःखम्, जन्मदुःखम्, जरादुःखम्, मरणदुःखमिति। तत्र मातुः कुक्षौ अन्धतमसीव[1] प्रविष्टस्य सङ्कुञ्चनप्रसारणदुःखं गर्भदुःखम्। जायमानस्य मातुरुदरान्निर्गच्छतो जन्मदुःखम्। वलि[2]तपलितस्खलनादिदुःखं जरादुःखम्। मरणावस्थायां स्थूलशरीरं त्यजतो मरणदुःखम्। एतदत्राध्यात्मिकं[3] दुःखे[4]ऽन्तर्भूतमप्रीतदुःखं बुद्ध्याध्यवसितं पुरुषः प्राप्नोति तस्य चेतनत्वात्, न तु लिङ्गमचेतनत्वादिति भावः॥

कियन्तं कालमित्याह—'लिङ्गस्याविनिवृत्तेः' इति। यावल्लिङ्गस्याविनिवृत्तिस्तावदित्यर्थः[5]। तस्य च निवृत्तिः प्रधानपुरुषान्तरज्ञानात्। यतश्चैवं तस्माद्दुःखं[6] स्वभावेन। लिङ्गगर्भाद्यवस्थासु स्वभावतो दुःखमित्यर्थः। लोकत्रये सुखमपि प्राप्नोति, तन्नोक्तं तस्यानियतत्वात्। जरादिदुःखं तु नियतमिति ॥५५॥

---

योऽयं भावलिङ्गभूततत्सर्गः स किमीश्वरात्, यथोच्यते—

ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा।

इति, किं वा पुरुषात्, यथोच्यते—

पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्।

इति, किं वा स्वभावात्, यथोच्यते—

स्वाभाविकमेवेदं सर्वं जगन्नहि मरुदादयः केनचित् क्रियन्ते।

इत्यत्राह—

**इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥५६॥**

---

१ मत्पाठः। क. ख. अन्धतमस इव। २ क.......चलितास्ख°। ३ ख. एतद्वाध्यात्मिकं। ४ क. दुःखं। ५ मत्पाठः। क. °स्यापि निवृत्तेस्त...इत्यर्थः। ख. °स्याविनिवृत्तेत इत्यर्थः। ६ क. ख दुःखस्वभावेन।

'इत्येष प्रकृतिकृतः' इत्यादि। आरभ्यत इत्यारम्भः। प्रकृतिकृत इति प्रधानकृतः, नेश्वरादिकृत इत्यर्थः। लोकत्रयं त्रिगुणात्मकं भवति, तच्च त्रिगुणाया एव प्रकृतेरुत्पद्यते। नापि स्वभाविकम्, विपरीतगुणदोषप्रसङ्गाद् देशानियमयोगाच्च ॥

स किंस्वरूप इत्याह—'महदादिविशेषभूत[1]पर्यन्तः' इति। बुद्धिरादिर्यस्यारम्भस्य। भूतानि लोकत्रये यान्यभिन्नसंस्थानानि स्थूलशरीराख्यानि। विषयाश्च। वाह्याश्च विषयाः सूक्ष्माः स्थूलाः। ते पर्यन्तेऽवसाने यस्य स तथोक्तः। अनेन भावलिङ्गभूतसर्गाख्यास्त्रय आख्याताः ॥

किमर्थमयं प्रधानस्यारम्भ इत्यत्राह—'प्रतिपुरुषविमोक्षार्थम्' इति। एकैकस्य पुरुषस्य पुरुषस्य विमुक्त्यर्थमारम्भः, पुरुषाणां वहुत्वात्। भावसर्गे भूतसर्गे चानेक इति दर्शयति। तथाहि मोक्षार्थं[2] विषयोपभोगार्थं चायमारम्भ इति द्रष्टव्यम्। प्रधानेन हि पुरुषार्थः कर्तव्यः। स च द्विविधः—विषयोपभोगः कैवल्यं च। तदुभयं कृत्वा निवर्तत इति ॥

'स्वार्थः' इति। यः कश्चित् देवदत्तस्वार्थ इव परार्थौ[3] रहितितं प्रवर्तते न परस्तपस्करोति (?) तथा प्रधानमपीत्यर्थः ॥५६॥



ननु च सचेतनस्य बुद्धिपूर्विका प्रवृत्तिर्भवति, प्रधानस्याचेतनत्वात्कथं लोकत्रये पुरुषं विषयैः संयोज्य ध्यानेन विप्रमोच्य निवर्तत। कथमेवंविधा प्रवृत्तिः। नायं नियमः, अचेतनानामपि लोके प्रवृत्तिदर्शनात्। यदाह—

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥५७॥

---

१ °भूत° इति कखपुस्तकयोर्नास्ति। २ एतदनन्तरं खपुस्तके 'तथाहि' इत्यस्ति। ३ क. पदार्थौ।

'वत्सविवृद्धिनिमित्तम्[1]' इत्यादि। वत्सस्य विवृद्धिः पुष्टिः। तस्या निमित्तम् ॥

'क्षीरस्य यथा प्रवृत्तिरज्ञस्य' इति। अचेतनस्य। यथा तृणादिकमचेतनं गवाशितं[2] पीतं च, वत्सस्य पुष्टिः कर्तव्येति, क्षीरात्मना परिणमति कृतार्थं च निवर्तत इति ॥५७॥

—:*:—

यदि पुरुषविमोक्षार्थं प्रधानस्य प्रवृत्तिः, प्रवृत्तेः प्राक् पुरुषस्य कैवल्यं स्थितमेव, तत् किं तेन प्रवृत्तेन ? तथा चाहुः—

*मध्वर्थे प्रस्थितः कश्चिद् ग्रामाभ्याशे तु माक्षिकम् ।*
*अङ्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।। इति ।।*

अत्राह—

औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥५८॥

'औत्सुक्यम्[1]' इत्यादि। यथौत्सुक्यनिवृत्त्यर्थमभिमतक्रियासु लोकः प्रवर्तते, तद्वत् प्रलयावस्थायां पुरुषोऽपि मोक्षनिमित्तं यदौत्सुक्यं तन्निवृत्तये प्रवर्तयेत्प्रधानमिति ॥५८॥

—:○*○:—

उदाहरणान्तरमाह—

रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात् ।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥५९॥

१ क. °विवृद्धिर्निमित्तम्। २. क. गवादिकं।

१ 'औत्सुक्येत्यादि' पठनीयम् ?

'रङ्गस्य'[1] इत्यादि । नृत्यतीति नर्त्तकी । सा यथा रङ्गस्य नृत्तं दर्शयित्वा तस्मान्नृत्तान्निवर्तते विरमति, दृष्टाहमनेनेति कृतप्रयोजना सती, तथा पुरुषस्यात्मानं संप्रकाश्य देवादि[2]भावरूपं गता[3] निवर्तते प्रकृतिः प्रधानमित्यर्थः[4] ॥५९॥



ननु च नटी रङ्गात् स्वार्थं साधयति, प्रकृतेस्तु पुरुषार्थः स्वार्थो येनैवमाचरतीत्याह –

नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥६०॥

'नानाविधैः' इत्यादि । पूर्वं सप्तभिर्धर्मादिभिरुपायैस्त्रिषु विषये ष्वात्मानं प्रकाशयत्युपकारिणी, तदनन्तरमेकेन ज्ञानाख्येन कैवल्यं कुर्वाणोपकारिणी भवति ॥

'अनुपकारिणः पुंसः' इति । न पुमांस्तां प्रत्युपकरोति, अहमनयोपकृत इति । पुनस्सा तमुपकरोति ॥

नासौ तामित्याह–'गुणवत्यगुणस्य सतः' इति । गुणसत्त्वा[1]त्प्रकृतिः सक्रिया[2], निर्गुणत्वात् पुरुषो निष्क्रिय इति । तस्यार्थमपार्थकं चरति । तस्य पुंसोऽर्थो द्विविधः—विषयोपभोगः कैवल्यं च । तन्निरर्थकं करोति, यतस्तस्याः प्रयोजनाभावः । व्यक्तात्मनाऽऽत्मानं दर्शयति नत्वव्यक्तात्मना ॥६०॥



---

१ क. ईशस्य । २ मत्पाठः । क. संप्रकाश्यते देवादि° । ख. संप्रकाश्यतेतवा ( पा ) दि° । ३ ख. गदा । ४ क. °मित्युक्तम् ।

१ मत्पाठः । क. गुणस्सत्त्वान् . ख. गुणस्सत्त्वात् । २ क. सक्रिया ।

तथाहि—गुणानां साम्यावस्था प्रकृतिः। कुतश्च सा न सर्वात्मना-ऽऽत्मानं प्रकाशयति, पुमानपि न सर्वथा पश्यति? तथा चाहुः—

*गुणानां परमं रूपं न दृष्टिपथमृच्छति।*
*यत्तु दृष्टिपथं प्राप्तं तन्मायावस्तु तुच्छकम्॥* इति। *अत्राह—*

**प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।**
**या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य॥६१॥**

'प्रकृतेः' इत्यादि। सुकुमारतरमिति सूक्ष्मतरमितरत्। एतदुक्तं भवति—प्राग्व्यक्तात्मना प्रकाशयति न त्वव्यक्तात्मनापि, येन ज्ञानावस्थायां प्रकृतेर्मतिर्भवति मम सूक्ष्मतरं न किञ्चिदपरमस्ति यद् द्रष्टव्यं पुरुषेण[1]॥

('या दृष्टाऽस्मि' इति। सा प्रकृतिर्व्यक्तात्मना च[2]) दृष्टाहमनेनेति न पुनर्दर्शनमुपैति पुरुषस्य, द्रष्टव्याभावात्। ततश्चैवं सर्वथा प्रकृतिरात्मानं प्रकाशयति, पुरुषश्चैतां सर्वथा पश्यति॥६१॥



तस्मान्न पुरुषस्य बन्धो नापि संसरणं मोक्षोवेत्याह—

**तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित्।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥६२॥**

'तस्मान बध्यते' इत्यादि। बन्धाभावान्न बध्यते। पुरुषस्यापि कार्यत्वाद्बन्धो नास्ति। न विमुच्यते तस्या बन्धनात्। नापि संसरति निष्क्रियत्वात्। कश्चिदिति पुरुष इत्यर्थः॥

कस्य तर्हि बन्धादय इत्याह—संसरति बध्यते मुच्यते च प्रकृतिरिति। ननु च तस्याः सुकुमारत्वाद् बन्धादयो न सम्भवन्त्येवेत्यत्राह-

१ एतदनन्तरं कपुस्तकेऽयं पाठः, 'क्रिया दृष्टास्तीति सा प्रकृतिर्व्यक्तात्मना न'।

२ धनुश्चिन्हाङ्कितं कपुस्तके नास्ति।

नानाश्रयेषुरभिवज्यते (?) । तत्राश्रयाः[1] भावलिङ्गभूतास्सर्गाः । ते प्रकृतिपुरुषवन्नानाविधाः ॥६-॥

ततश्च नानाश्रयत्वादेव दर्शयन्नाह—

रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थम्प्रति विमोचयत्येकरूपेण ॥६३॥

'रूपैः' इत्यादि । धर्मादयो बुद्धे रूपान्युक्तानि । 'सप्तभिः' । ज्ञानं त्यक्त्वा ते च प्रकृतेरात्मभूताः । सैवात्मनैव पुरुषार्थं प्रत्यात्मानं महदादिसूक्ष्मपर्यन्तं लिङ्गं बध्नाति । बन्धश्च त्रिविधः । तच्च लिङ्गं भावादिभिरधिवासितमर्थमेव[1] । संसरतीति । प्रकृतिरेव संसरति ॥

'सैव च' इति । प्रकृतिः पुरुषार्थं प्रति कैवल्यार्थं विमोचयत्यात्मानम् ॥

'एकरूपेण' इति । एकं च तद्रूपं चेति । ज्ञानाख्येन रूपेणेत्यर्थः । यं पुरुषमपेक्ष्य ज्ञानमुत्पादयति तं प्रत्यव्यक्तमात्मानं संहरतीत्यर्थः । नहि धर्मादयः पुरुषधर्मा यत्तैर्बध्यते । नापि संसरति, अलिङ्गभावत्वात् । नापि मुच्यते, तस्य बन्धनत्वात् ॥६३॥

तदेवं[1] ज्ञानं कथमुत्पद्यते येन मोचयतीत्याह—

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥६४॥

१ मत्पाठः । क. तत्र याः । ख. तत्रश्रयाः ।

१ मत्पाठः क. भावादिर्भावासित° । ख. भावादिर्भवासितत° ।

१ क. तदेवा° ।

'एवं तत्त्वाभ्यासात्' इत्यादि। एवमिति वक्ष्यमाणे योऽयम्। तत्त्वानि पञ्चविंशतिः। तेषां पुनः पुनः स्वरूपेणाभ्यसनमभ्यासः। यदेतत् सूक्ष्मशरीरं भौतिकं च तस्मिन्न भवामि, अपि तु प्रकृतिः॥

'न मे' इत्यादि। न ममेदमपि तु प्रकृतेः॥

नाहमिति। नाप्यहं प्रकृतिरित्येवं तत्त्वाभ्यासात्। किंविशिष्टात्-अविपर्ययादहमित्यप्रमानसंशयात् ज्ञानमुत्पद्यते॥

ईदृशमित्याह— 'अपरिशेषम्' इति। परिपूर्णं विशुद्धम् संसारमलापगमात् केवलमेकमित्यर्थः॥ ६४॥

ननु ज्ञानेन पुरुषः किं पश्यतीत्याह—

तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम्।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः॥ ६५॥

'तेन' इत्यादि। यत् प्रकृतिज्ञानमुत्पद्यते तं प्रति निवृत्तः प्रसवो लिङ्गभूतसर्गाख्यो यस्याः प्रकृतेः सा तथोक्ता। प्रसवनिवृत्त्या वा यो विषयो विषयेभ्यो निवर्तते तद्वशात्, सप्तभ्यो रूपेभ्यो धर्मादिभ्यो निवृत्ता प्रकृतिर्भवति। भावसंसर्गोऽपि यस्या निवर्तत इत्यर्थः। तामेवंविधामव्यक्तरूपां पश्यति पुरुषः॥

'प्रेक्षकवदवस्थितः' इति। यथा प्रेक्षकः प्रवर्त्तितनृत्तामुपसंहृतनृत्तां च नर्त्तकीं पश्यति, तथा पुरुषोऽपि प्रवर्तितसर्गामुपसंहृतसर्गां चेति॥

'स्वस्थः' इति। आत्मनि स्थितो न प्रकृतिस्थः, ततः प्रकृतेर्निवृत्तत्वात्॥ ६५॥

---

२ मत्पाठः। क. एवं च याभ्यासात्। ख. एवन्त्वयाभ्यासात्। ३-विसर्गौ-पुस्तकयोर्न स्तः। ४ मत्पाठः। क. ...इत्यादि। ख. ग मे इत्यादि। ५ क. ख. अपरिपूर्णम्।

१ क. अनु। ख. पठितुं न शक्यते। २ तत्-इति पठनीयम्?। ३ क-पुस्तके नास्ति।

ननु च यदि प्रकृतिर्गर्भभूः पुरुषं प्रति निवृत्तप्रसवा, तस्याश्च प्रकृतेस्तदानीं सर्वगतत्वादस्त्येव संयोगस्तत्किमिति पुनः शरीरोत्पत्तिर्न भवतीत्याह-

दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥

'दृष्टा मया' इत्यादि । तयोर्द्वयोरेकः पुरुष उपेक्षकः, सर्वथा'''[1]त्वात् । यथा प्रेक्षको नटीमुपेक्षते निवृत्ताभिलाषत्वात् ॥

'दृष्टाऽहमित्युपरता ऽन्या' इति[2] । अपरा प्रकृतिरुपरता निवृत्तप्रसवा । सर्वथाऽहमनेन दृष्टेति ॥

ततश्च संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य । विषयोपभोगार्थः[3] सर्गः । तस्मिन्नेव चरितार्थत्वात् न पुनः सर्गमारभते । नहि नटी रङ्गे प्रेक्षकैर्निराकांक्षितं पुनर्नृत्तमारभते ॥ ६६ ॥



यथात्मज्ञानात् कैवल्यप्राप्तिः, तदनन्तरमेव शरीरं कस्मान्न निवर्तत इत्याह-

सम्यग्ज्ञानाधिगमात् धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशात्, चक्रभ्रमवद्धृतशरीरः ॥ ६७ ॥

'सम्यक् ज्ञानाधिगमात्' इत्यादि । सम्यक् ज्ञानमात्मज्ञानम्, तस्याधिगमादात्मज्ञानप्राप्तेरित्यर्थः ॥

'धर्मादीनामकारणप्राप्तौ' इति । न कारणमकारणम्, तस्यामकारणप्राप्तावेव तदुक्तं भवति । सम्यक् ज्ञानाधिगमात्तेषां धर्मादीनामग्निदग्धबीजवदशक्तत्वात् ॥

जन्मान्तरसंस्कारवशाद्धृतशरीरः[1] पुमांस्तिष्ठति । कथम् - चक्रभ्रमवत् । यथा कुलालव्यापारे निवृत्तेऽपि[2] वेगवशात् कियन्तमपि कालं

१ ख. सर्वथा'''दृत्वात् । २ मत्पाठः । क.ख. °त्युपरतानेति । ३ मत्पाठः । क.ख. °भोगतार्थः ।

१ मत्पाठः । क.ख. °शरीरं । २ मत्पाठः । क.ख. वृतेऽपि ।

चक्रभ्रमस्तिष्ठति तथा शरीरमपीत्यर्थः ॥ ६७ ॥

कदा[1] स मोक्षो भवतीत्यत्र—

प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥६८॥

'प्राप्ते शरीरभेदे' इत्यादि । लिङ्गभौतिकशरीरे पृथग्भूते यथा संभूते लयं गति[2] तेष्वित्यर्थः (?) ॥

'चरितार्थत्वात् प्रधानविनिवृत्तौ' इति । प्रधानं लिङ्गात्मना परिणतं निवर्तते । निवृत्तावुभयं कैवल्यमाप्नोति ॥

'ऐकान्तिक[3]मात्यन्तिकं च' इति । तत्रात्मज्ञानोत्पादादवश्यंभावि कैवल्यमित्यैकान्तिकम् । सत्यपि तयोः संयोगे प्रयोजनाभावान्न पुनः सर्ग इत्यात्यन्तिकमिति ॥ ६८ ॥

समत्यां विशुद्धिं दर्शयन्नाह—

पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥६९॥

'पुरुषार्थज्ञानम्' इत्यादि । पुरुषार्थं[1] ज्ञानं चेति पुरुषार्थज्ञानम् । यदिदं पञ्चविंशतितत्त्वज्ञानं तत्प्रधानम्, पुरुषार्थमोक्षोऽनेन प्राप्यत इति कृत्वा । गुह्यमिदमप्रकाश्यम् । साधुजनादन्यस्मै न देयमित्यर्थः ॥

'परमर्षिणा स[2]माख्यातम्' इति । कपिलमुनिना प्रकाशितम् ॥

'स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम्' इति । यत्र ज्ञाने भूतानां ब्रह्मादिस्तम्बपर्यन्तानां स्थित्यादयो व्यवस्थाप्यन्ते । तत्रोत्पन्नानां प्रबन्धेनावस्थानं स्थितिः । सा[3] च त्रिषु स्थानेषु दैवमानुषतैर्यग्योनेषु

---

१ मत्पाठः । क. ख. तदा । २ गच्छति—इति पठनीयम् ? । ३ मत्पाठः । क. ख. ऐकान्तिक° ।

१ मत्पाठः । क. ख. पुरुषार्थं । २ क. ख्यातम् । ३ क. ख. स ।

उत्पत्तिः सृष्टप्रधानात् यावत् तन्मात्रेभ्यः पञ्चमहाभूतानि। सृष्ट्युपसंहारे महाप्रलयः, सर्वोऽप्युत्क्रमेण । तद्यथा पृथिव्यादयस्तन्मात्रादिषु लीयन्ते यावत्प्रधानमिति। तेन पञ्चविंशतितत्त्वव्यतिरिक्तं नास्तीत्येतदुक्तम् ॥ ६९ ॥

मुनिना समाख्यातमिति कुतो ज्ञायत इत्याह—

एतत् पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय, तेन च बहुधा कृतं तन्त्रम् ॥७०॥

'एतत्' इत्यादि। 'पवित्रम्' इति। दुःखत्रयमेतत् पुनातीति कृत्वा। सर्वभेदानामग्रेभवत्वादग्र्यम् ॥

'मुनिरासुरयेऽनुकम्पया प्रददौ' इति। कपिलस्य महामुनेः[1] सहोत्पन्नाश्चत्वारो धर्मादयः। तत्र ज्ञानाख्येन भावेनान्धे तमसि वर्तमानं जगत् दृष्टवतो मुनेः करुणोत्पन्ना। तया च प्रेर्यमाण आसुरिं सगोत्रब्राह्मणं वर्षसहस्रयातिनमागत्योवाच। 'आसुरे रमसे त्वं गृहस्थधर्मेण' इति। स तमाह - 'भगवन् न रमेऽहम्' इति। पुनर्वर्षसहस्रे पूर्णे तं गत्वा तथोवाच। सोऽपि 'भगवन् न रमेऽहम्' इत्युवाच। ततो मुनिना 'यदि विरक्तस्त्वम्, एहि[2] ब्रह्मचर्यं चर' इत्यसावुक्तः। स तु प्रतिपद्य[3] गृहस्थधर्मं त्यक्त्वा प्रव्रजितः। तस्मै शिष्यायानुकम्पया संक्षिप्य दत्तवान्। 'तम एव खल्विदमासीत्'। तस्मिंस्तमसि क्षेत्रज्ञ एव प्रथमः। तमः प्रधानम्, क्षेत्रज्ञः पुरुष उच्यते। आसुरिरपि तदेव संक्षिप्तं पञ्चशिखाय स्वशिष्यायानुकम्पया प्रददौ ॥

'तेन' इति। पञ्चशिखेन मुनिना बहुधा कृतं तन्त्रम्। षष्टितन्त्राख्यं षष्टिखण्डं कृतमिति। तत्रैव हि षष्टिरर्था व्याख्याताः ॥ ७० ॥

---

१ क. मुनेः। २ कपुस्तके नास्ति। ३ ख. प्रकृतिपद्य।

ननु च षष्टितन्त्रमेवास्तु किं सप्तत्येति स्वशास्त्रकरणप्रयोजनमाह—

शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः।
संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥

'शिष्यपरम्परया' इत्यादि। मुनेरासुरेः पञ्चशिखस्तथा[1] गर्गगौतमप्रभृतिर्णरामतंग्रस्या[2] (?) ईश्वरकृष्ण नामानं परिव्राजकमित्यनया शिष्यपरम्परया। इति ज्ञानमय[3]रूपेणागतं सिद्धान्तं षष्टितन्त्रम्। सम्यग्विज्ञाय संक्षिप्तं षष्टितन्त्रम्, पञ्चविंशतितत्त्वाख्यं ज्ञानमित्यर्थः॥

आर्यमतिः, अधिगततत्त्वज्ञानतयार्यमतिः[4]॥

'आर्याभिः' इति। सप्तत्येत्यर्थः। 'दुःखत्रयाभिघातात्' 'एतत् पवित्रम्' इति सप्तत्याभिहितम् ॥७१॥

अत्र षष्टितन्त्रे बहवोऽर्थाः, तेऽत्र नोक्ता इत्याह[1]—

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥७२॥

'सप्तत्याम्' इत्यादि। 'एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः' इत्यादिना ग्रन्थेन य उक्तास्ते कृत्स्नस्य षष्टितन्त्रस्यापि॥

किन्तु 'आख्यायिकाविरहिताः परवादविवर्जिताः शुद्धाः' इति। आख्यायिका आख्यानम्, तद्विरहिताः। परचोद्यं तेन विवर्जिताः। शुद्धाः केवलाः। परं बंधमोक्षोपयोगिनोऽर्थाः दर्शिता इति तस्मात् सम्पूर्णेयं सप्ततिरिति ॥७२॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य[2]श्रीगोविन्दभगवत्पूज्यपादशिष्येण
श्रीशङ्करभगवता कृता सांख्यसप्ततिटीका
समाप्ता ॥

---

१ क. पञ्चशिखात्तथा। २ ख. °प्रभृतिर्णरामतंग्रम्य। ३ ख. ज्ञानमय।
४ मत्पाठः। क. अधिगततत्त्वज्ञानतत्त्वतया°। ख. अधिगतज्ञानतत्त्वतया°।

१ ख. इत्यत्राह। २ ख. परिव्राजाचार्य।

